मनुष्य के मूत्र से भरी हुई मनुष्य की खोपड़ी, उल्लू का सिर, बिच्छू की पूँछ, वत्सनाभ विष, सफेद मेढक का मांस, हाथी तथा ऊँट का मूत्र, ये सब समान भाग लेकर सूक्ष्म चूर्ण बनावें तथा द्रव द्रव्य (मूत्र आदि) में चूर्ण को बारम्बार कल्क करके शोषित करें। इसे अन्न (खाने) अथवा पानी में देने से शत्रु की सेना का नाश हो जाता है ॥५७-५९॥

**स्पृष्टमात्रेण तेनैव विस्फोटास्तु समन्ततः ॥**

**तस्य देहे ज्वरस्तीव्रो भवेत्तीव्रा च वेदना ॥६०॥**

**म्रियते सप्तरात्रेण प्रत्यानयनवर्जितः ।**

उपर्युक्त चूर्ण को शत्रु के शरीर से स्पर्श करा देने से उसके शरीर में फोड़े हो जाते हैं तथा तीव्र ज्वर-पीड़ा होती है। यदि इसका प्रतीकार (रोक-थाम) न किया गया तो सात रात्रियों में शत्रु की मृत्यु हो जाती है ॥ ६० ॥

॥ अथासिधाराङ्गदालेपः ॥

**अथान्यत्सम्प्रवक्ष्यामि यस्य यानेन साधनम् ॥६१॥**

**कथितं चैव रुद्रेण त्रिदशेभ्यः प्रसादतः ।**

असिधाराङ्गदा लेप का कथन—अब मैं दूसरा प्रयोग कहता हूँ, जिसको ध्यानपूर्वक साधन करना चाहिए। यह प्रयोग देवताओं से प्रसन्न होकर रुद्र ने कहा था ॥ ६१ ॥

**रुधिरं कृष्णसर्पस्य कुक्कुटस्य तु कस्यचित् ॥६२॥**

**कच्छपस्य मयूराणां रोचनं जात्यञ्जनं तथा ।**

**कुङ्कुमं भद्रमुस्तं च तगरं कृष्णमेव च ॥६३॥**

**एतानि समभागानि पुष्यार्के च समाहरेत् ।**

**आश्लेषायां तु पिष्टानि कृत्वा पात्रे च राजते ॥६४॥**



**दशाहं स्थापयेद् भूम्यां पश्चादुद्धृत्य लेपयेत् ।**

**असिधाराङ्गदा नाम स्वयं रुद्रेण भाषिता ॥६५॥**

काले साँप का खून, किसी मुर्गे का रक्त, कछुआ तथा मयूर का रक्त, गोरोचन (Bostanrus), जायफल (Myristica Fragrans); अञ्जन (Memecylon Edule), केशर (Crocus Sativas), नागरमोथा (Cyperus Rotundus) तथा काला तगर (Valiriana), सब समान भाग लेकर पुष्यार्क योग में संग्रह करे तथा दूसरे दिन आश्लेषा नक्षत्र में चाँदी के पात्र में पीस कर रखे। तत्पश्चात् दश दिन तक पृथ्वी में पात्र को गाड़ दे; फिर खोद कर शरीर पर लेप करे। यह असिधाराङ्गदा नामक लेप स्वयं भगवान् शिव ने कहा है ॥ ६२-६५ ॥

**अथालिम्पेत्तु गात्राणि स कृत्वाऽस्थीन्यथापि वा ।**

**फलपुष्पे तथा पत्रे धूपसप्तैस्तथैव च ॥६६॥**

**अगदोऽयं महामन्त्रो भूतानां च भयावहः ।**

**अन्ने पाने मन्त्रयित्वा प्रयुञ्जीत विधानतः ॥६७॥**

॥ मन्त्रः ॥

**ॐ नमो भगवते रुद्राय शान्ताय दिव्ययोगाय दिव्यरूपाय जटिलब्रह्मचारिणे अगदोक्षि त्रिदशैव महाबलशतं मनोहं ठः ठः स्वाहा ।**

इसे गात्रों में लेप करे तथा अस्थि-संधियों पर लगावे तो शत्रु से युद्ध करने में विजय प्राप्त होती है। इस कार्य में फल, फूल, पत्र आदि जो भी प्रयुक्त करे उन्हें धूप से धूपित तथा ऊपर लिखित 'ॐ नमो भगवते ...... हं ठः ठः स्वाहा' इस अगद मन्त्र से अभिमन्त्रित करे। यह अगद नामक महामन्त्र प्राणियों के लिए भयावह है। इससे अभिमन्त्रित करके उक्त लेप द्रव्य खाने-पीने में शत्रु को देने से वह युद्ध में हार जाता है। इसे विधिपूर्वक प्रयुक्त करना चाहिए ॥६६-६७॥

पीड्यमानं जपेन्मन्त्रं शुचिर्भूत्वा समाहितः।
अष्टोत्तरसहस्रं तु ततो मन्त्रमिमं जपेत् ॥६८॥
कन्यया पेषयच्चैव गोष्ठमध्ये प्रयत्नतः।
तदशक्तौ चितायां तु यथाशक्ति पुनः पुनः ॥६९॥

लेप के द्रव्यों को उखाड़ते तथा पीसते हुए भी इस मन्त्र का पाठ करना चाहिए, फिर दश दिन तक उसी स्थल पर १००८ बार मन्त्र का जप करना चाहिए। कुमारी कन्या के हाथ से द्रव्य पवित्र होकर प्रयत्नपूर्वक गोशाला में पिसवाना चाहिए अथवा चिता की भूमि पर उक्त द्रव्य दश दिन तक गाड़ना चाहिए ॥ ६८-६९ ॥

स्वयं रुद्रेण संप्रोक्तं सर्वकार्यप्रसाधकम्।
सर्वं चैव प्रयोक्तव्याः सर्वशत्रुविनाशकाः ॥७०॥
तस्मात् सर्वप्रयत्नेन रक्षितव्याः प्रयोगवान्।
अभक्ते नैव प्रोक्तव्यं क्रूरे पापजने तथा ॥७१॥
दातव्यं भक्तियुक्ताय शास्त्रज्ञायाऽमरेश्वरि ! ॥७२॥

इतिपार्वती-शिवसंवादेवीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वरमहातन्त्रे प्रथमः पटलः ॥१॥

सर्वकार्यप्रसाधक लेप को स्वयं रुद्र ने कहा है। ये सभी शत्रु-विनाशक प्रयोग करने चाहिए तथा प्रयत्नपूर्वक प्रयोगकर्त्ता को इसे गुप्त रखना चाहिए। भक्ति-रहित, क्रूर तथा पापियों के लिए यह प्रयोग नहीं कहे गये हैं। हे अमरेश्वरि ! भक्तियुक्त, शास्त्रज्ञ को ही ये प्रयोग बतलाने चाहिए ॥ ७०-७२ ॥

श्री पार्वती शिव संवाद में वीर भद्रेश्वरतन्त्र से उद्धृत उड्डामरेश्वर महातन्त्र में प्रथम पटल पूर्ण हुआ ॥ १ ॥

---

# द्वितीयः पटलः

॥ अथ जलस्तम्भनम् ॥

श्रीपार्वत्युवाच

अथान्यत् सम्प्रवक्ष्यामि जलस्तम्भनमुत्तमम्।
कुम्भीरवेल्वदंष्ट्रानि रुधिरं मांसमेव च ॥१॥
हृदयं कच्छपस्यैव शिशुमारं पुनः पुनः।
विभीतकस्य तैलेन सर्वानिकत्र कारयेत् ॥२॥

जलस्तम्भन प्रयोग—श्री पार्वती बोलीं—अब मैं उत्तम जल-स्तम्भन का प्रयोग कह रही हूँ। घड़ियाल की दाढें, रुधिर तथा मांस, कछुए का हृदय एवं सूँस नामक जन्तु का हृदय और बहेड़े (Terminalia Bellerica) के तेल से सबको एक में मिलावें ॥ १-२ ॥

न्यासकर्म ततः कृत्वा जले तिष्ठेद् यथासुखम्।
भद्रकस्य रसं ग्राह्यं लक्षणस्य मकरस्य च ॥३॥
डुण्डुभस्य शिरो ग्राह्यं सर्वानिकत्र कारयेत्।
विभीतकस्य तैले तु पच्यमाने च दापयेत् ॥४॥
न्यासकर्म प्रकुर्वीत सप्ताहं तिष्ठते जले।
तत्तैलं पाचयेल्लौहे कृष्णाष्टम्यां समाहितः ॥५॥

जल पर इसका न्यास ( छिड़काव ) कर्म करें, फिर जलस्तम्भित हो जाता है और सुखपूर्वक जल पर खड़ा हुआ जा सकता है। विधारा ( Gmalina Asiatica ) का रस तथा सुन्दर मगरमच्छ का रक्त एवं

डुण्डुभ नामक सर्प का सिर लेकर बहेड़े ( Terminalia Bellerica ) के तेल में पकायें, फिर जल पर न्यास-कर्म के द्वारा एक सप्ताह तक खड़ा हुआ जा सकता है। तेल में पकाने का कार्य कृष्ण पक्ष की अष्टमी को एकाग्रचित्त होकर करना चाहिए ॥ ३-५ ॥

**चतुर्मासोषितो भूत्वा देवमभ्यर्च्य शङ्करम् ।**
**अभिमन्त्र्य च मन्त्रेण मृत्तिकास्नानदक्षिणम् ॥६॥**
**अष्टाधिकसहस्रं तु जपित्वा होममाचरेत् ।**
**अनेन मन्त्रयित्वा तु ततः सिद्धयति नान्यथा ॥७॥**

॥ मन्त्रः ॥

**ॐ नमो भगवते उड्डामरेश्वराय जलं स्तम्भय स्तम्भय हुँ फट् स्वाहा ।**

इस कर्म की सिद्धि हेतु चातुर्मास व्रत रहकर भगवान् शिव की पूजा करनी चाहिए। द्रव्यों को ऊपर लिखित मन्त्र 'ॐ नमो ........ फट् स्वाहा' से अभिमन्त्रित करना चाहिए और मिट्टी से स्नान करके पवित्र रहना चाहिए। मन्त्र का १००८ बार जप करके हवन (दशांश) करने पर अवश्य उक्त प्रयोग की सिद्धि होती है। इसे अन्यथा नहीं समझना चाहिए ॥ ६-७ ॥

॥ अथ लूताकरणम् ॥

**वक्ष्येऽथ लूताकरणं तं शृणुष्व समासतः ।**
**भल्लातकरसं गुञ्जा विषं चित्रकमेव च ॥८॥**
**कपिकच्छूपरोमाणि चूर्णं कृत्वा प्रदापयेत् ।**
**एतत्सर्वं समायुक्तो लूताकरणमुत्तमम् ॥९॥**
**तस्य रूपं प्रवक्ष्यामि जायते यस्तु लक्षणः ।**



**अङ्गानि धूममायान्ति मूर्च्छयन्ति मुहुर्मुहुः ॥१०॥**
**एतद्रूपं भवेत्तस्य लूताविकृतलक्षणम् ।**

शत्रु के शरीर में मकड़ी (व्रण) उत्पन्न करना--अब मैं लूताकरण ( मकड़ी उत्पन्न करना ) कह रही हूँ, संक्षेप में सुनें। भिलावा (Semicarpus Anacardium) का रस, घुँघची (Abrus Precatorius), वत्सनाभ विष, चित्रक ( Plumbago Zeylomica ) तथा केंवाच के रोम लेकर चूर्ण करे। इस चूर्ण के स्पर्श कराने से शरीर में लूता उत्पन्न हो जाती है। इसका रूप तथा लक्षण यह है कि शरीर के अंग धूम्र वर्ण के हो जाते हैं और बारम्बार मूर्च्छा होती है। लूता से विकृत शरीर के यही लक्षण हैं ॥८-१०½॥

॥ अथ लूताविनाशनम् ॥

**चिकित्सां तस्य वक्ष्यामि येन सम्पद्यते सुखम् ॥११॥**
**उशीरं चन्दनं चैव प्रियङ्गुतगरं तथा ।**
**रक्तचन्दनकुष्ठं च लेपो लूताविनाशनः ॥१२॥**
**मन्त्राभिमन्त्रितं कृत्वा ततः स्वस्थो भविष्यति ।**

॥ मन्त्रः ॥

**ॐ नमो भगवते उड्डामरेश्वराय कुहलीकुर्वनी स्वाहा ।**

लूता का विनाशन—लूता-विकार की चिकित्सा का वर्णन कर रही हूँ—जिससे सुख की प्राप्ति होती है। खस ( Root of Andropogon Muricatus ), सफेद चन्दन ( Santalem Album ), प्रियङ्गु (Selastrus Panicalta ), तगर ( Valiriana ), लालचन्दन ( Pterocarpus Santalinus ) तथा कूठ ( Sussurealappa )—सब बराबर मिलाकर पीस कर लूता के स्थानों पर लेप करे और इसे उक्त मन्त्र 'ॐ नमो ........ स्वाहा' से अभिमन्त्रित करें तो लूता विनष्ट हो जाती है और व्यक्ति स्वस्थ हो जाता है ॥११-१२½॥

॥ अथ पुनः लूताकरणम् ॥

कृष्णसर्पशिरो ग्राह्यं मुखे निःक्षिप्तसर्षपात् ॥१३॥

भल्लातकेन संयुक्तं कृष्णसूत्रेण वेष्टयेत् ।
वल्मीकस्य मृदःकोशे अन्तर्धूमेन पाचयेत् ॥१४॥

कपिकच्छुपरोमाणि संयुक्तं षोडशांशकैः ।
विषस्य चूर्णं कृत्वा तु शत्रूणां मूर्ध्नि निःक्षिपेत् ॥१५॥

शरद्ग्रीष्मवसन्तेषु लूताकरणमुत्तमम् ।
प्रस्विन्ने च ततो गात्रे लग्नास्तस्मिंस्तु सर्षपाः ॥१६॥

लूतां च सविषां कुर्यान्नात्र कार्या विचारणा ।

वेदनाजातमात्रेण मन्त्रजाप्यं तु पूर्ववत् ॥१७॥
पूर्वोक्तेन विधानेन स्वस्थो भवति पूर्ववत् ।

पुनः लूताकरण विधान-काले सर्प के सिर को लेकर उसके मुख में सरसों ( Eruca Sativa ) डालकर भिलावाँ ( Semicarpus Anacardium) भी डालें और काले तागे से उसे वेष्टित करें। बाँबी की मिट्टी चारों ओर खूब लपेटकर अन्दर ही अन्दर धुएँ से पकावे। १६ भाग केंवाच के रोएँ से युक्त करके विष के चूर्ण के साथ मिलाकर शत्रुओं के सिर पर डालें। शरद्, ग्रीष्म तथा वसन्त ऋतुओं में यह उत्तम लूताकरण विधान है। पसीने से युक्त शरीर में जहाँ-जहाँ ये सरसों लग जायेंगी, वहीं विष से युक्त लूता उत्पन्न हो जायेंगी। इसमें विचार करने की कोई आवश्यकता नहीं है। इस लूताकरण विधान को मन्त्र जप के द्वारा पूर्ववत् विधि से स्वस्थ किया जा सकता है ॥१३-१७½॥



॥ अथ सस्यविनाशनम् ॥

अथ सस्यविनाशं च कथयामि समासतः ॥१८॥
येनैव कृतमात्रेण वज्रं कृत्वा विचक्षणः ।
क्षेत्रे सम्पातयेद्यस्मिंस्तस्मिन् सस्यविनाशनम् ॥१९॥

फसल को नष्ट करना—अब मैं संक्षेप में सस्य-विनाश की विधि कह रही हूँ, जिसके द्वारा विचक्षण पुरुष वज्र का निर्माण करके खेत में गाड़ देता है और फसल नष्ट हो जाती है ॥१८-१९॥

माहेन्द्रेण क्षिपेत्तत्र प्रयोगेण तु मन्त्रवित् ।
अथ मन्त्रं पुनर्वक्ष्ये प्रयोगेषु प्रयोजकम् ॥२०॥
अष्टोत्तरशतेनैव मन्त्रेणाऽनेन मन्त्रयेत् ।

॥ मन्त्रः ॥

ॐ नमो भगवते उड्डामरेश्वराय वज्रं विनाशय वज्रं सुरपतिराज्ञापय हुं फट् स्वाहा ।

जहाँ पर बिजली गिरी हो वहाँ की मिट्टी लेकर वज्र बनाये और एक सौ आठ बार 'ॐ नमो भगवते ···· हुं फट् स्वाहा' इस मन्त्र से मन्त्रित करें तथा खेत में गाड़ दें तो सम्पूर्ण सस्य का विनाश हो हो जाता है ॥२०½॥

इमं योगं प्रयुञ्जातो विधिपूर्वेण कर्मणा ।
पर्णानां चैव योगेन क्षिपेत्पर्णं विनश्यति ॥२१॥

इस योग को प्रयुक्त करता हुआ विधिपूर्वक वज्र में वहाँ की पत्तियों को मिलावे तो फसल की पत्तियाँ विनष्ट हो जाती हैं ॥२१॥

॥ अथ ग्रामोच्चाटनम् ॥

पुनरुच्चाटनं वक्ष्ये शृणु अत्र यथातथा ।
येनैव कृतमात्रेण ग्रामस्योच्चाटनं भवेत् ॥२२॥

ग्राम के उच्चाटन की विधि—मैं पुनः उच्चाटन की विधि बता रही हूँ, जिसके करने मात्र से गाँव का उच्चाटन हो जाता है ॥२२॥

ग्रामे चतुर्णां च पथां मृदमादाय बुद्धिमान् ।
गोमयेनाकृतिं कृत्वा ग्रामस्य च चतुर्दिशः ॥२३॥
चिताकाष्ठानलं कृत्वा कोकिलाकाकपक्षकैः ।
हुत्वा चाहुतिसाहस्रं ततो भस्म समाहरेत् ॥२४॥
अभेदेन समुत्सार्य कृत्वा मुष्टिं सभस्मकम् ।
शतवाराभिजप्तेन अनेनैव तु मन्त्रितः ॥२५॥

॥ मन्त्रः ॥

ॐ नमो भगवते महाकालरुद्राय त्रिपुरविनाशनकारणाय दह दह धम धम पच पच मथ मथ मोहय मोहय उन्मादय उन्मादय उच्छेदय उच्छेदय श्रीमहारुद्र आज्ञापयति शब्दकरी मोहिनी भगवती खें खें हुं फट् स्वाहा ।

बुद्धिमान् व्यक्ति चौराहे की मिट्टी तथा गोबर लेकर गाँव की चारों दिशाओं में आकार ( चौकोर पीठ ) बनाकर चिता की लकड़ियों तथा अग्नि की स्थापना करके कोयल तथा कौए के पंखों से हजार-हजार बार हवन करे तथा सात मुट्ठी भस्म लेकर 'ॐ नमो भगवते ········· फट् स्वाहा' इस मन्त्र से १०० १०० बार अभिमन्त्रित करें ॥ २३-२५ ॥

ग्रामे वा नगरे वापि भस्मप्रक्षेपणेन च ।
उच्छेदनं भवत्येव रिपूणां नात्र संशयः ॥२६॥

ग्राम अथवा नगर में इस अभिमन्त्रित भस्म का प्रक्षेपण करें इससे ग्राम आदि में रहने वाले शत्रुओं का उच्छेद हो जाता है ॥ २६ ॥



॥ अथ स्वस्थीकरणम् ॥

दूरीकृतं पुनर्भस्म नगरे वसते पुनः ।
कुल्वीकारं प्रवक्ष्यामि शृणु योगं समासतः ॥२७॥

यदि यह भस्म हटा दी जाय तो नगर में उच्चाटित लोगों का पुनः निवास हो जाता है । अब मैं कुल्वीकार योग का संक्षिप्त वर्णन करूँगा, कृपया आप सुनें ॥२७॥

॥ अथ कुल्वीकरणम् ॥

येन योजितमात्रेण पुनः कुल्वो भविष्यति ।
पादपांशुसमायुक्तैरन्तरा घृतगोमयैः ॥२८॥
वृषभस्य पुनः शत्रोः कृत्वा चैवाकृतिं बुधः ।
एकविंशतिवारं हि मन्त्रेणानेन मन्त्रिताम् ॥२९॥
छेदयेत्तीव्रशस्त्रेण ततः कुल्वो भविष्यति ।
प्रस्थितानां च करणे मन्त्रेणाऽनेन मन्त्रवित् ॥३०॥

॥ मन्त्रः ॥

ॐ नमो भगवते उड्डामरेश्वराय कामप्रभञ्जनाय अमुकं च्छः च्छः स्वाहा ।

कुल्वीकार योग—जिस प्रयोग की योजना करने पर मनुष्य कुल्व हो जाता है उसे कह रहा हूँ । शत्रु के पैरों के नीचे की धूल, घृत तथा गोबर में मिलाकर एक बैल की आकृति बनावे जिसमें शत्रु की आकृति भी बनी हुई हो । 'ॐ नमो भगवते ···स्वाहा' इस मंत्र से २१ बार अभिमन्त्रित करे तथा तीव्र शस्त्र से उसे काट दे तो शत्रु कुल्व हो जाता है । अमुक के स्थान पर शत्रु का नाम लेना चाहिए ॥२८-३०॥

॥ अथ स्वस्थीकरणम् ॥

**कृत्वा मधु घृतावर्त्तं च स्थाने ह्यत्र प्रयोजयेत् ॥**

**स्नात्वा च गव्यदुग्धेन ततः स्वस्थो भविष्यति ॥३१॥**

स्वस्थीकरण – यदि स्वस्थ करना हो तो पूर्वोक्त द्रव्यों में घृत के स्थान पर मधु (शहद) का प्रयोग करना चाहिए तथा उस बैल को गाय के दूध से स्नान कराना चाहिए ॥३१॥

॥ अथोन्मत्तीकरणम् ॥

**मूलं कनकबीजस्य घृतचूर्णं समन्ततः ।**

**गृहचाटकस्य बिष्ठा च तथा करञ्जबीजकम् ॥३२॥**

**एतदुन्मत्तकरं चूर्णं भक्षणात्तत्करं व्रजेत् ।**

**एकविंशतिवारञ्च मन्त्रेणानेन मन्त्रितम् ॥३३॥**

**भोजे पाने प्रदातव्यमुन्मत्तः स्यान्न संशयः ।**

॥ मन्त्रः ॥

**ॐ नमो भगवते उड्डामरेश्वराय अमुकं उन्मादय उन्मादय च्छः च्छः स्वाहा ।**

उन्मत्तकरण योग—धत्तूर ( Datura Stramonium ) की जड़ का चूर्ण, घृत (घी), चटक (गौरैया) नामक पक्षी की विष्ठा तथा कंजा ( Pongamia Gilabra ) के बीजों का चूर्ण एक में मिलावें। यह उन्मत्तकारी चूर्ण है, जिसे खाने से व्यक्ति उन्मत्त हो जाता है। इसे २१ बार 'ॐ नमो भगवते ·····स्वाहा' इस मन्त्र से अभिमन्त्रित करना चाहिए तथा खान-पान में देने से निश्चय ही मनुष्य उन्मत्त हो जाता है ॥ ३२–३३½ ॥

॥ अथ स्वस्थीकरणम् ॥

**अजाक्षीरेण शोणितेन पिबेत्तु शतपुष्पिकाम् ॥३४॥**

**घृतेन सह वा पीत्वा ततः सम्पद्यते सुखम् ।**



स्वस्थीकरण—सौंफ के चूर्ण को बकरी के दूध अथवा रक्त या घृत के साथ पीये तो उससे सुख की प्राप्ति होती है अर्थात् उन्माद नष्ट हो जाता है ॥३४½॥

॥ अथान्धीकरणम् ॥

**एकविंशतिवारं हि मन्त्रितं लवणं खरम् ॥३५॥**

**करवीरककाष्ठाग्नौ मन्त्रैर्धूमेन पाचयेत् ।**

**लवणं तत्तु सङ्गृह्य चूर्णं कृत्वा विचक्षणः ॥३६॥**

**भक्षे पाने प्रदातव्यं मन्त्रेणानेन मन्त्रितम् ।**

**मन्त्रितं शतवारञ्च शत्रोर्वा यस्य कस्यचित् ॥३७॥**

**भक्षणाच्च भवेदन्धो नात्र कार्या विचारणा ।**

॥ मन्त्रः ॥

**ॐ नमो उड्डामरेश्वराय शरीरमन्धं कुरु ठः ठः स्वाहा ।**

अन्धीकरण प्रयोग – तीक्ष्ण लवण ( Sodic leridum ) को २१ बार अधोलिखित मन्त्र से अभिमन्त्रित करके कनेर ( Nerium Odorum ) की लकड़ियों की आग में मन्त्र पढ़ते हुए धूएँ से पकावें, फिर इस लवण ( नमक ) को ग्रहण करके चूर्ण कर दें। और 'ॐ नमो·········स्वाहा' इस मन्त्र से सौ बार अभिमन्त्रित करके शत्रु अथवा किसी को खान-पान में देने से निश्चितरूपेण वह मनुष्य अन्धा हो जाता है ॥३५–३७½॥

॥ अथ कुष्ठीकरणम् ॥

**अथान्यत्सम्प्रवक्ष्यामि कुष्ठीकरणमुत्तमम् ॥३८॥**

**येन सम्पीतमात्रेण कुष्ठी भवति मानवः ।**

कुष्ठीकरण विधान—अब मैं उत्तम कुष्ठीकरण विधान कह रही हूँ, जिन ओषधियों के पी लेने से मनुष्य कुष्ठ रोग से ग्रस्त हो जाता है ॥ ३८½ ॥

भल्लातकरसं गुञ्जा तथा मण्डलकारिका ॥३९॥
गृहगोधासमायुक्ता भक्षे पाने प्रदापयेत् ।
सप्ताहाज्जायते कुष्ठं तत्पीतं च समेधितम् ॥४०॥

भिलावाँ ( Semicarpus Anacardium ) का रस, घुँवुची ( Abrus Precatorius ) तथा रक्त पुनर्नवा को लेकर काली छिपकली से युक्त करे। इसे भोजन अथवा पान में देने से एक सप्ताह में कुष्ठ रोग उत्पन्न हो जाता है तथा यदि स्वल्प कुष्ठ रोग हो तो वह बढ़ जाता है ॥३९-४०॥

॥ अथ कुष्ठशमनम् ॥

एतस्य शमनं कुर्याद् यथा रुद्रेण भाषितम् ।
धात्रीबदिरनिम्बानि शर्करासहितानि च ॥४१॥
विचूर्ण्य मधुसर्पिर्भ्यां जीर्णानि दापयेद्भिषक् ।
शालिभक्तं पटोलश्च घृतयुक्तं च पायसम् ॥४२॥
सोष्णं वा मुद्गचूर्णं तु शालियुक्तमथापि बा ।
एतेन दत्तमात्रेण नरः सम्पद्यते सुखम् ॥४३॥

कुष्ठशमन विधान—रुद्र के वचनानुसार इस कुष्ठ का निम्नलिखित प्रकारेण शमन करना चाहिए। तालीस पत्र ( Taxas Baccata ), खैर ( Acacia Catechu ) तथा नीम ( Azadirachta Indica ) के पत्रों को शक्कर मिलाकर घृत तथा शहद के साथ कुछ दिन रखकर वैद्य कुष्ठ रोग के रोगी को दे तथा चावल ( Oryza Sativa ) का भात, घृतयुक्त खीर तथा परवल ( Trichoranthes Diocca ) का जूस पथ्य में देना चाहिए। इसके अतिरिक्त गरम मूँग ( Phascshus Trilobus ) का चूर्ण अथवा चावल का चूर्ण भी पथ्य में



देना चाहिए। इस प्रकार औषधियों के सेवन कराने से व्यक्ति कुष्ठ रोग से मुक्त होकर सुख प्राप्त करता है ॥४१-४३॥

जलजीवं तु सङ्गृह्य शोषयेदातपे नरः ।
तस्य संदापयेद्धीमान् यस्य इच्छेत्तु जीवितम् ॥४४॥
अङ्गदाहेन तीव्रेण धमेत्तं नष्टचेतसम् ।
यदीच्छेज्जीवितं तस्य अङ्गं प्रक्षालयेद् ध्रुवम् ॥४५॥
पद्ममूलस्य चूर्णं तु क्षालयेत्काञ्जिकेन तु ।
तैलेनोद्वर्तयेल्लिङ्गं क्षालयेच्छीतवारिणा ॥४६॥
अनेन क्रियमाणेन नरः सम्पद्यते सुखम् ।

जोंक को ग्रहण करके आतप में सुखाकर तीव्र अंगदाह वाले स्थान पर लगाकर वहाँ का रक्त चुसावे। जब तक वह जोंक मृत न हो जाय, तब तक ऐसा ही करें, फिर कमल की जड़ का चूर्ण काञ्जी मिला कर तैयार करे और उससे अंगों का प्रक्षालन करे, लिंग आदि मर्म स्थानों पर तैल का उबटन करें तथा शीतल जल से प्रक्षालित करें। ऐसा करने से मनुष्य कुष्ठ रोग से मुक्त होकर सुख प्राप्त करता है ॥ ४४-४६½ ॥

॥ अथ वशीकरणविधानम् ॥

अथान्यत्सम्प्रवक्ष्यामि वश्यादिकरणं परम् ॥४७॥
येन विज्ञानमात्रेण लोको भवति किङ्करः ।

वशीकरण विधान—अब मैं परम वशीकरण विधान का कथन कर रही हूँ जिसके ज्ञान मात्र से संसार दास बन जाता है ॥४७॥

पुराणिकस्य हृदयं तथा कुष्ठेन भावितम् ॥४८॥
शिवनिर्माल्यं सञ्चूर्णं यस्य मूर्ध्नि विनिक्षिपेत् ।
नियतं किङ्करो भूत्वा यावज्जीवं स तिष्ठति ॥४९॥
सप्तवारं मन्त्रयित्वा मन्त्रेणाऽनेन मन्त्रवित् ।

॥ मन्त्रः ॥

ॐ नमो भगवते उड्डामरेश्वराय स्वाधिकारं साधय साधय स्वाहा ।

पुराणिका ( Cyperus ) का मध्य भाग, कूठ (Sussurea lappa) के रस में भावित करें, उसमें शिवनिर्माल्य का चूर्ण मिलाकर 'ॐ नमो…… …स्वाहा' इस मन्त्र से सात बार अभिमन्त्रित करके जिसके सिर पर डाल दें वह जीवन पर्यन्त दास होकर रहता है ॥४८ ४९½॥

चन्दनं तगरं कुष्ठं प्रियङ्गुनागकेसरम् ॥५०॥
कृष्णधत्तूरपञ्चाङ्गं समभागं तु कारयेत् ।
छायायां वटिका कार्या प्रदेया भक्षपानतः ॥५१॥
पुरुषं चाथ वा नारीं यावज्जीवं वशं नयेत् ।
सप्ताहं मन्त्रितं कृत्वा मन्त्रेणाऽनेन मन्त्रवित् ॥५२॥

॥ मन्त्रः ॥

ॐ नमो भगवते मोहमालिने ठः ठः स्वाहा ।

चन्दन ( Sandal wood ), तगर ( Valiriana ), कूठ (Sussurea lappa ), प्रियंगु ( Selas'rus Panicalta ); नागकेसर ( Messua Ferrea ) तथा काले धत्तूर के पञ्चाङ्ग ( जड़, तना, पत्ते, फूल, फल ) सम भाग लेकर छाया में सुखा कर गुटिका बनायें और एक सप्ताह तक 'ॐ नमो…… …स्वाहा' मंत्र से अभिमंत्रित करे । इसे खान-पान में पुरुष अथवा नारी को देने से वह जीवन पर्यन्त वश्य होता है ॥५०-५२॥

शङ्खपुष्पी ह्यधःपुष्पी तथा सङ्कोचपुष्पिका ।
श्वेता च गिरिकर्णी च समं सप्ताहभाविताः ॥५३॥



स्वशुक्रेण समायुक्ता भक्षे पाने प्रदापयेत् ।
तं वशीकरणं प्रोक्तं यावज्जीवं न संशयः ॥५४॥

शङ्खाहुली (Canscora Decussatea), अन्धाहुली ( Tricoderma Indicum ), लज्जालु ( Mimosa Pudica ), फिटकरी (Argilla Vitriolutum ) तथा काला जीरा ( Clitoria Ternatea ) समान भाग लेकर एक सप्ताह तक भावित करें । इस चूर्ण को अपने वीर्य से युक्त करके खान-पान में देने से जीवन पर्यन्त मनुष्य वशीभूत रहता है ॥ ५३-५४ ॥

॥ अथ विषहरणप्रयोगः ॥

वज्रं वाथाऽभया लोध्रं मञ्जिष्ठा हिङ्गुपत्रिका ।
दिव्यं वचा विशालाक्षा कम्बुग्रीवा सुशोभना ॥५५॥
कुमारीत्वचाङ्गलेपेन सप्तहस्तप्रमाणतः ।
ददाति दशमीना च मन्त्रः कश्चित् प्रगृह्यते ॥५६॥
विषसुप्तपतित्वेन नात्र कार्या विचारणा ।
जलमध्ये सहाचौरं कुरुते वर्त्तको मम ॥५७॥

विषहरण प्रयोग—थूहर ( Euphorbia Nerifolia ), हरड़ ( Terminalia Chebula ), लोध्र ( Symplocos Racemosa ), मँजीठ ( Rubia Manjishta ), हींगपत्री ( Asafoetida ), दिव्या ( Tiaridium Indicum ), वच (Acorao calamus), विशालाक्षी (Tiaridium Indicum ), कम्बुग्रीवी ( Andropogon Aciculatus ), गोरोचन ( Bostanrus ) तथा कुमारी ( Jasminum Sambac ) का गूदा मिलाकर सात हाथ प्रमाण का लेप करें । इसमें कुछ लोग मन्त्र का विधान करते हैं । यह 'दशमीना' नामक लेप है, जिससे विष का काटा हुआ व्यक्ति उठ पड़ता है, इसमें कोई संशय नहीं है । जल के मध्य में उस विषयुक्त व्यक्ति को रखे । यह लेप विष को दूर कर देता है ॥ ५५-५७ ॥

**दधि मधु नवनीतं पिप्पली शृङ्गवेरम्,**
**मरिचमपि तु दद्यात् सत्तमं सैन्धवेन ॥**
**यदि भवति सरोषं तक्षकेणाऽपि दंष्टम्,**
**गदमिह खलु पीत्वा निर्विषं तत्क्षणं स्यात् ॥५८॥**

दही, शहद, मक्खन या घृत, पिपरी ( Piper Longum ), अदरख ( Zingiber Officinale ), कालीमिर्च ( Piper Nigrum ) तथा सेंधा नमक। ( Rock Salt ) सब मिलाकर यदि पान करावे तो तक्षक नाग के द्वारा भी सरोष काटे जाने पर मनुष्य तत्क्षण विष-रहित हो जाता है ॥५८॥

**कुष्ठामृता चातिविषा हरिद्राया विलेपनम् ।**
**गरुडोक्तं विषहरमौषधं प्राणिजीवनम् ॥५९॥**

कूठ ( Sussurea lappa ), कांगनी ( Selastrus Panicalta ), अतीस ( Aconitum Heterophyllum ) तथा दारु हल्दी ( Berberis Aristata ) का लेप करने से विष दूर होता है। यह गरुड़ द्वारा कहा गया प्राणिजीवन औषधियों का सङ्घटक है ॥५९॥

॥ अथ रात्रिदर्शनाञ्जनसिद्धिः ॥

**उलूकस्य जम्बुकस्य गृध्रस्य महिषस्य च ।**
**बिडालस्य वराहस्य काकभेकस्य च त्वचः ॥६०॥**
**मूषकस्य तु नेत्रं च सूक्ष्मचूर्णानि कारयेत् ।**
**अनेनाञ्जितनेत्रो हि रात्रौ पश्येद् यथा दिवा ॥६१॥**
**एतेषां योगमन्त्रोऽयं मनुहीनो न सिद्धयति ।**

॥ मन्त्रः ॥

**ॐ नमो भगवते रुद्राय शिवाय ज्योतिषां पतये देहि ज्योतींषि मतिवीर्यकरणाय स्वाहा ।**



रात्रि में देखने वाले अञ्जन की सिद्धि—उल्लू, सियार, गृध्र, भैंसा, बिल्ली, सुअर, कौआ तथा मेढ़क की त्वचा का चूर्ण एवं चूहे के नेत्रों का सूक्ष्म चूर्ण मिलाकर यदि नेत्रों में अञ्जन की भाँति आँजे तो रात्रि में भी दिन के समान मनुष्य देख सकता है। इस योग में 'ॐ नमो भगवते ...... स्वाहा'' मन्त्र का जप करे अन्यथा सिद्धि की प्राप्ति नहीं होती है ॥६०–६१½॥

**एकरात्रोषितो भूत्वा कृष्णाष्टम्यां समाहितः ॥६२॥**
**लिङ्गसम्पूजनं कृत्वा जलं चैवाऽभिमन्त्रयेत् ।**

एक रात्रि का व्रत करके कृष्ण पक्ष की अष्टमी तिथि को एकाग्र चित्त से शिव के लिङ्ग का पूजन करके, पूजन के जल को मन्त्र से अभिमन्त्रित करे ॥ ६२½ ॥

**दक्षिणस्यां दिशि स्थित्वा शतमष्टोत्तरं जपेत् ॥६३॥**
**ततः सिद्धयन्ति मन्त्राणि चाञ्जनानि समन्ततः ।**

॥ मन्त्रः ॥

**ॐ नमो भगवते उड्डामरेश्वराय अञ्जनमन्त्रसिद्धिं देहि मे स्वाहा ।**

तत्पश्चात् दक्षिण दिशा में बैठ कर १०८ बार ॐ नमो............ मे स्वाहा' इस मन्त्र का जप करे तो अञ्जन तथा मन्त्रादि योग सिद्ध होते हैं ॥६३½॥

॥ अथ पिशाचीकरणम् ॥

**कनकस्य च बीजानि प्रियङ्गुगुग्गुलस्तथा ॥६४॥**
**आत्मानं धूपयित्वा तु योजयेद् राजसंसदि ।**
**योगमिमं समाघ्राति स वश्यो जायते भृशम् ॥६५॥**

पिशाचीकरण ( राजसभा में मान-सम्मान तथा जय )—धत्तूर

( Datura Stramonium ) के बीज, प्रियंगु ( Selastrus Panicalta ) तथा गूगुल ( Commiphoro Mukul ) को मिलाकर अपने शरीर तथा वस्त्रों को इससे धूपित करके यदि राजसभा में जायँ तो जो भी इस योग को सूँघेगा वही वशीभूत होगा ॥६४-६५॥

कनकस्य तु बीजानि श्वेतार्कचन्द्रकेसरम् ।
कुष्ठं च देवदारुं च सर्वमेकीकृतं तथा ॥६६॥
पिष्ट्वा तेन लिप्तगात्रो योगशक्त्या बलिष्ठया ।
यत्र यत्र प्रविष्टस्तु तत्र तत्र जयी भवेत् ॥६७॥

इति श्रीशिवपार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वर-महातन्त्रे द्वितीयः पटलः ॥२॥

धत्तूर के बीज, सफेद मदार ( White Calortopis Gigantea ), कर्पूर ( Camphora Officinarum ), नागकेसर (Messua Ferrea), कूठ ( Sussurea lappa ) तथा देवदारु--ये सब एकत्र करके पीसें और शरीर पर लेप करें तो बलिष्ठ योगशक्ति के द्वारा वह व्यक्ति जहाँ-जहाँ प्रवेश करता है, वहीं उसे विजय की प्राप्ति होती है। न्यायालय, युद्ध, विवाद एवं मल्लयुद्धादि क्रीड़ाओं में वह अवश्य विजयी होता है ॥६६-६७॥

श्रीशिवपार्वती-संवादात्मक वीरभद्रेश्वरतन्त्रोद्धृत उड्डामरेश्वर महातन्त्र में द्वितीय पटल समाप्त हुआ ॥२॥

# तृतीयः पटलः

॥ अथ उच्चाटनप्रकारः ॥

काकस्य पक्षौ सङ्गृह्य सर्पकञ्चुकमेव च ।
श्मशानभस्मसंयुक्तं शत्रोरुच्चाटनं भवेत् ॥१॥

उच्चाटन प्रकार—कौए के दोनों पंख तथा सांप की केंचुल को ग्रहण करके श्मशान की भस्म के साथ शत्रु के घर में अथवा सिर पर डालें, तो उसका उच्चाटन हो जाता है ॥ १ ॥

॥ अथ भूतवादकथनम् ॥

भूतवादं प्रवक्ष्यामि यथा गरुडभाषितम् ।
येनैव ज्ञातमात्रेण शत्रवो यान्ति वश्यताम् ॥२॥

भूतवाद कथन—अब मैं गरुड़ के द्वारा कहा गया भूतवाद बता रहा हूँ, जिसके ज्ञान मात्र से शत्रु वशीभूत होते हैं अथवा पीड़ित होते हैं ॥ २ ॥

शत्रुनिर्यासं सङ्गृह्य चूर्णं सत्वं च तस्य वै ।
भावयेत्सप्तरात्रं तु भोजनैः सह दापयेत् ॥३॥
दत्तमात्रेण तेनैव पिशाचैर्गृह्यते तु सः ।
स्वस्थीकारे प्रदातव्या जया तु मधुयष्टिका ॥४॥

अम्लवेत के गोंद को अम्लवेत के रस से सप्त रात्रि तक भावित करें, फिर भोजन के साथ इसे जिसे दें वही पिशाचों के द्वारा ग्रस्त हो जाता है। स्वस्थ करने के लिए जयन्ती (Abutilon Avicennea) तथा मुलेठी पिलानी चाहिए ॥ ३-४ ॥

निर्यासैः शालसम्भूतैर्बीजानि कतकस्य च ।
भावयेत्सप्तरात्रं तु भोजनैः सह दीयते ॥५॥
तस्य भक्षणमात्रेण ग्रहैः सङ्गृह्यते नरः ।
शर्करादुग्धपानेन स्वस्थो भवति नान्यथा ॥६॥

शाल वृक्ष का गोंद तथा केतकी ( Strychnos Potatorum ) के बीजों का चूर्ण सात रात्रि तक भावित करे, फिर जिसे भोजन के साथ खिलावे तो वह व्यक्ति भक्षण करते ही ग्रहों ( शनि आदि ) से ग्रस्त हो जाता है। स्वस्थ करने के लिए शक्कर एवं दूध पिलाना चाहिए ॥ ५-६ ॥

वास्तुकस्य तु निर्यासं बीजानि कतकस्य च ।
मर्दित्वा यातयामाभ्यां गृह्यते ब्रह्मराक्षसैः ॥७॥
शर्करादुग्धपानेन स्वस्थो भवति नान्यथा ।

बथुए ( Chenopodium Albun ) का गोंद तथा केतकी के बीजों का चूर्ण एक में पीस कर जिसे खिलाया जाता है वह दो रात्रियों में ब्रह्मराक्षसों के द्वारा पीड़ित हो जाता है। शक्कर तथा दूध पिलाने से वह स्वस्थ हो जाता है ॥ ७ ॥

भावयेत्सप्तरात्रं तु भक्षे पाने प्रदापयेत् ।
कपिकच्छुकनिर्यासैर्मातुलुङ्गस्य बीजकम् ॥८॥

॥ मन्त्रः ॥

ॐ नमो भगवते उड्डामरेश्वराय महेश्वरो नाम स्वाहा ।

केंवाच का गोंद तथा बिजौरा नीबू ( Citrus Medica ) के बीज सात रात्रियों तक भावित करके खान-पान में देने से मनुष्य दुष्ट ग्रहों के द्वारा ग्रस्त हो जाता है। उपर्युक्त योगों की सिद्धि हेतु 'ॐ नमो ....नाम स्वाहा।' इस मन्त्र का नित्य जप और अभिमन्त्रण करना चाहिए ॥ ८ ॥



॥ अथ स्वस्थीकरणम् ॥

आमलक्याश्च चूर्णेन स्त्रीदुग्धसहितेन च ॥९॥
पाययित्वा विष्कृतं तु स्वास्थ्यं सञ्जायते ध्रुवम् ।
शर्करापद्मकिञ्जल्कपद्मकेसरकल्ककैः ॥१०॥
चूर्णीकृतैस्तच्चूर्णं तु दुग्धेन सह दापयेत् ।
तदा दुष्टग्रहैर्मुक्तः स्वस्थश्च जायते नरः ॥११॥

इति श्रीशिवपार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वर-महातन्त्रे तृतीयः पटलः ॥ ३ ॥

स्वस्थीकरण—स्त्री के दूध के साथ आँवले ( Phyllunthus Embelica ) का चूर्ण पिलाने से दुष्ट ग्रहों से ग्रस्त शरीर को स्वास्थ्य-लाभ होता है। शक्कर तथा कमल-केशर को कमल-केशर के काढ़े में मिलाकर दूध के साथ पिलाने से भी मनुष्य दुष्ट ग्रहों से मुक्त हो जाता है तथा स्वास्थ्य-लाभ करता है ॥ ९-११ ॥

श्रीशिवपार्वतीसंवादात्मक वीरभद्रेश्वरतन्त्रोद्धृत उड्डामरेश्वरमहातन्त्र में तृतीय पटल समाप्त हुआ ॥३॥

## चतुर्थः पटलः

॥ अथ भूतवादसिद्धिमन्त्राः ॥

**अथातः सम्प्रवक्ष्यामि भूतवादे सुदुर्लभम् ।**
**येन विज्ञानमात्रेण सर्वसिद्धिः प्रजायते ॥ १ ॥**

अब मैं भूतवाद में दुर्लभ मन्त्रों का कथन कर रहा हूँ, जिनके ज्ञान-मात्र से सर्वसिद्धि हो जाती है ॥ १ ॥

॥ सुवर्णलाभमन्त्रः ॥

**ॐ ह्रीं काली कङ्काली किल किल स्वाहा ।**

**इदं मन्त्रं पूर्वं सहस्रदशकं जपेत् । ततः सहस्रं जुहुयात्कङ्काली वरदा भवति सुवर्णमाषचतुष्टयं प्रत्यहं ददाति ॥**

सुवर्ण-लाभ का मन्त्र—इस मन्त्र को पहले दस हजार बार जप करे तत्पश्चात् सहस्रमन्त्रों से हवन करे तो काली वरदान देती हैं और प्रतिदिन चार माषा स्वर्ण प्रदान करती हैं ॥

॥ अथ सर्वजनमुखस्तम्भनमन्त्रः ॥

**ॐ ह्रीं नमो भगवती दुर्वचती किलि वाचा भञ्जनी सर्वजनमुखस्तम्भिनी ह्रां ह्रीं ह्रूं ह्रौं ह्रः स्वाहा ।**

**अनेन मन्त्रेण बिल्वमरिचं घृताक्तं सहस्रहवनं कुर्यात्, समस्तजनपदाः किङ्करा भवन्ति । एतन्मन्त्रेण यदि न्यग्रोधसमिधं घृताक्तं सहस्रैकं होमयेत् तदा स्त्रीवश्यं भवति ।**

सर्वजनमुख स्तम्भन मन्त्र—इस मन्त्र से घृतयुक्त बेल ( Aegle Mormelos ) तथा कालीमिर्च से हजार बार हवन करे तो सारा ग्राम



दास हो जाता है अर्थात् सभी का मुख स्तम्भित हो जाता है । इसी मन्त्र से यदि बरगद ( Ficus Indica ) की समिधाओं को घृत में डुबोकर हजार बार हवन करे तो स्त्री वशीभूत होती है ।

॥ अथ कवित्वप्राप्तिमन्त्रः ॥

**ॐ रौं ह्रीं ह्लूं ह्लूं ऐं वद वद वाग्वादिनी वागीश्वरी नमः स्वाहा ।**

**अनेन मन्त्रेण सहस्रजप्तेन कवित्वं करोति नात्र सन्देहः ।**

कवित्व-शक्ति प्राप्ति का मन्त्र--इस मन्त्र का हजार बार जप करने से कवित्व-शक्ति की प्राप्ति होती है । इसमें कोई सन्देह नहीं है ।

॥ अथ पुनः कवित्वप्राप्तिमन्त्रः ॥

**ॐ ॐ ॐ ईं ईं ईं ऐं ऐं ऐं नमः स्वाहा ।**

**अनेन मन्त्रेण दशसहस्रजप्तेन कवित्वं करोति ।**

इति श्रीशिवपार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वर-महामन्त्रे चतुर्थः पटलः ॥ ४ ॥

कवित्व-शक्ति प्राप्ति का दूसरा मन्त्र—इस मन्त्र का दस हजार बार जप करे तो कवित्व-शक्ति की प्राप्ति होती है ।

श्रीशिवपार्वतीसंवादात्मक वीरभद्रेश्वरतन्त्रोद्धृत उड्डामरेश्वर महातन्त्र में चतुर्थ पटल समाप्त हुआ ॥ ४ ॥

पञ्चमः पटलः

॥ अथ सम्मोहनम् ॥

श्रृणु देवि प्रवक्ष्यामि यथा त्रैलोक्यमोहनम् ।
परपुरुषा वशं यान्ति यथावत् कथयामि ते ॥ १ ॥

हे देवि ! जिस प्रकार त्रैलोक्य मोहित होता है तथा पर ( शत्रु पुरुष वश्य हो जाते हैं, उस विधान को बता रहा हूँ, सुनिए ॥ १ ॥

एला कुष्ठं च लोध्रं च वचा च रक्तचन्दनम् ।
श्मशानभस्मसंयुक्तं प्रयोगं मारणान्तकम् ॥ २ ॥

इलायची ( Amomum Sabulatum ), कूठ (Sussurea lappa ) लोध ( symplocos Recemosa ), वच मीठी ( Acorao calamus ) तथा लालचन्दन ( Pterocarpus santalinus ) में श्मशान की भस्म मिलावे और इसको जिसे खिलावे वह वशीभूत रहता है अथवा वश्य न रहने पर मृत्यु को प्राप्त हो जाता है ॥ २ ॥

॥ अथ भगसङ्कोचेन पतिवशीकरणम् ॥

कुलत्थं बिल्वपत्रं च रोचना च मनःशिला ।
एतानि समभागानि स्थापयेत् ताम्रभाजने ॥ ३ ॥
सप्तरात्रे स्थिते पात्रे तैलमेभिः पचेद् बुधः ।
तैलेन भगमालिप्य भर्त्तारमुपगच्छति ॥ ४ ॥
सम्प्राप्य मैथुनं भर्त्ता दासो भवति नान्यथा ।

भग-संकोच के द्वारा पति वशीकरण – कुलथी ( Dolichos Biflorus ), बेलपत्र, गोरोचन तथा मैनशिल को समान भाग लेकर ताँबे



के पात्र में सात रात्रियों तक रखें तथा इसको तेल में पकावें। जो नारी इस तेल को भग पर लेप करके पति के पास जायेगी, उससे मैथुन को प्राप्त करके पति दास की भाँति वशीभूत हो जाता है ॥ ३-४½ ॥

नागरैर्मधुसंयुक्तैर्गुटिकां कारयेद् बुधः ॥ ५ ॥
अश्वमूत्रेण संयुज्य पुरुषाणां वशङ्करम् ।
कुङ्कुमं शतपुष्पं च प्रियङ्गु रोचनं ततः ॥ ६ ॥
अजाक्षीरेण दातव्यं या भार्या दुर्भगा भवेत् ।
ततः सा सुभगा नित्यं पतिर्दासत्वमाप्नुयात् ॥ ७ ॥

नागरमोथा को शहद में पीसकर गुटिका बनाये तथा घोड़े के मूत्र में घिसकर जो नारी इसे अपने भग पर लेप करती है तो उससे पुरुष वशीभूत होते हैं ॥

केशर (Crocus Sativas), सौंफ, प्रियंगु (Selastrus Panicalta) तथा गोरोचन को बकरी के दूध से जो दुर्भगा नारी अपने भग पर लेप करती है वह सुभगा हो जाती है तथा पति दासता को प्राप्त हो जाता है ॥ ५-७ ॥

मातुलुङ्गस्य बीजानि पङ्कजस्य फलानि च ।
समुद्रजं रक्तचूर्णं मधुना सह लेपयेत् ॥ ८ ॥
तैलयोजितमात्रेण पतिर्दासो भवेद् ध्रुवम् ।

बिजौरा नीबू ( Citrus Medica ) के बीज, कमलगट्टा, ढोल-समुद्र ( Leda Macrophylla ) तथा सिन्दूर शहद के साथ तेल में पकावे और भग पर लेप करे तो पति वशीभूत होकर दास हो जाता है ॥ ८½ ॥

॥ अथ लिङ्गलेपेन नारीवशीकरणप्रयोगः ॥

अधुना सम्प्रवक्ष्यामि योगानां सारमुत्तमम् ॥ ९ ॥
येन विज्ञानमात्रेण नारी भवति किङ्करी ।

लिङ्गलेप के द्वारा नारीवशीकरण प्रयोग—अब मैं योगों के उत्तम सार को कह रहा हूँ, जिसके ज्ञानमात्र से स्त्री दासी होकर वशीभूत हो जाती है।

**उशीरं चन्दनञ्चैव मधुना सह संयुतम् ॥ १० ॥**
**गजहस्तप्रयोगोऽयं सर्वनारीप्रयोजकः ।**
**केवलं शशिना युक्तं कुङ्कुमं लेपयेद् भगे ॥ ११ ॥**
**निजवज्जायते साङ्गं जायते योनिसंश्चयम् ।**

खस ( Root of Andropogon Murieatus ) तथा चन्दन को मधु (शहद) के साथ लिङ्ग पर लेप करें तो यह गजहस्त प्रयोग सभी स्त्रियों को वशीभूत करने वाला है।

इस योग में कर्पूर के साथ केशर का लेप यदि नारी अपने भग पर करे तो योनि का संकुचन होता है और पुरुष का गजहस्त प्रयोग अति आनन्ददायी हो जाता है ॥ १०-११½ ॥

॥ अथ गजहस्तप्रयोगः ॥

**लवङ्गं सैन्धवं क्षौद्रं पिप्पली मरिचानि च ॥१२॥**
**नरस्य लेपयेद्गात्रां स भवेद् गजहस्तवत् ।**

नारी-वशीकरण में गजहस्त प्रयोग—लौंग (Clove tree flcoer), सेंधा नमक; शहद, पीपर ( Piper Longum ) तथा कालीमिर्च मिलाकर यदि मनुष्य के मदनध्वज पर लेप किया जाय तो वह हाथी की सूंड़ के समान हो जाता है, जो रमणियों को वश में करने हेतु उत्तम है ॥ १२ ॥

॥ अथ भगेऽरन्ध्रयोगः ॥

**वरटावेश्ममृत्तिकां शीततोयेन पेषयेत् ॥१३॥**



**तेनैव लिप्तमात्रेण भगे रन्ध्रो न जायते ।**
**तत्र प्रक्षालितेनाथ प्रसवत्वं भविष्यति ॥१४॥**

भग में अच्छिद्र योग—बर्रे के बाँबी की मिट्टी शीतल जल से पीस कर भग में लेप करे तो भग में छिद्र का अभाव हो जाता है। यदि भग को पुनः प्रक्षालित करे तभी प्रसव हो सकता है ॥ १३-१४ ॥

॥ अथ रमणीवशीकरणयोगः ॥

**यः स्वरेतः समादाय रत्यन्ते सव्यपाणिना ।**
**वामपादं स्त्रियो लिम्पेत्सा तस्य वशगा भवेत् ॥१५॥**

स्त्री-वशीकरण योग—जो व्यक्ति रति के अन्त में अपने वीर्य को बायें हाथ से लेकर स्त्री के बायें पैर में लगाता है तो वह स्त्री सदैव उसके वश्य रहती है ॥ १५ ॥

॥ अथ पतिवशीकरणयोगः ॥

**या भोगशेषे कान्तस्य लिङ्गं वामाङ्घ्रिणा स्पृशेत् ।**
**यावदायुर्भवेद् दासः स तस्या नात्र संशयः ॥१६॥**

पति-वशीकरण योग—जो नारी सम्भोगान्त में पति के लिंगेन्द्रिय को बायें पैर से स्पर्श करती है तो वह पति आयु-पर्यन्त उस स्त्री का निश्चितरूपेण दास हो जाता है ॥ १६ ॥

॥ अथ स्त्रीवशीकरणयोगः ॥

**कपोतविष्ठा सिन्धूत्थमधुकैः समभागिकैः ।**
**लिप्त्वा लिङ्गं भजेद् यां तु सा वश्या स्याद्वराङ्गना॥१७॥**

स्त्री-वशीकरण योग—कबूतर की विष्ठा, सेंधा नमक तथा शहद सम भाग लेकर लिङ्ग पर लेप करे और फिर जिस नारी से समागम करे तो वही वश्य हो जाती है ॥ १७ ॥

घनसारं सततज्वं मेढ्ं च मधुना सह।
पिष्ट्वा लिप्त्वा रजो यां च भजेत्सा वश्यगा भवेत् ॥१८॥

कर्पूर, सततज्व ( ब्रह्मदण्डी ) को शहद के साथ लिङ्ग पर लेप करके जिस रमणी का भजन किया जाय वही वशीभूत होती है ॥१८॥

रोचना कनकं शम्भुबीजं कर्पूरचन्दनम्।
एभिर्विलिप्तलिङ्गो यां भजते सा वशा भवेत् ॥१९॥

इति श्रीशिवपार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वर-महातन्त्रे पञ्चमः पटलः ॥ ५ ॥

गोरोचन, धत्तूर के फल, पारा, कर्पूर तथा सफेद चन्दन को पीस कर लिङ्ग पर लेप करे तथा स्त्रीगमन करे तो वह स्त्री वश्य होती है ॥ १९ ॥

श्रीशिवपार्वतीसंवादात्मक वीरभद्रेश्वरतन्त्रोद्धृत उड्डामरेश्वर-महातन्त्र में पञ्चम पटल समाप्त हुआ ॥ ५ ॥

## षष्ठः पटलः

॥ अथ दुर्लभयोगाः ॥

कृष्णच्छागरोमकृष्णमार्जाररोमकृष्णकाकरोमाणि कृष्णाष्टम्यां कृष्णचतुर्दश्यां वा शनिभौमयोर्वारेऽश्लेषानक्षत्र आर्द्रानक्षत्रे वा समभागानि कृत्वा कूपतडागनदीपयसा पेषयित्वा गुटिकां कृत्वा सङ्ग्रामे चोपविशेत्। रणपांशुना तिलकं कुर्यात्। अथानन्तरं येऽन्ये पुरुषा दर्शनं कुर्वन्ति ते कम्पयन्ति मूर्च्छयन्ति उत्पतन्ति पलायन्ते। ये पिष्ट्वा लेपं कुर्वन्ति तेषां शुक्रं क्वापि पतति न मुञ्चति।

दुर्लभयोग—काले बकरे के रोम, काले बिलाव के रोम तथा काले कौए के रोम लेकर कृष्ण पक्ष की अष्टमी या कृष्ण पक्ष की चतुर्दशी में, शनि अथवा मङ्गलवार को आश्लेषा या आर्द्रा नक्षत्र में, बराबर-बराबर करके कुएँ, तालाब एवं नदी के जल से पीस करके गुटिका ( गोली ) बनायें। इसे लेकर सङ्ग्राम में प्रवेश करे। युद्धभूमि की धूल से मिश्रित करके उपर्युक्त गुटिका को घिस कर तिलक लगावें। इसके बाद जो शत्रु के पुरुष इस तिलक का दर्शन करेंगे वे कम्पित, मूर्च्छित हो जाते हैं, उछलने लगते हैं और भाग जाते हैं। जो इस गुटिका को पीसकर शरीर में लेप करते हैं, उनका वीर्य किञ्चित् गिरता हुआ भी पूर्णरूपेण स्खलित नहीं होता। इस गुटिका के शरीर पर लेप करने से शस्त्रों का भी स्तम्भन होता है।

एष योगो मया प्रोक्तो देवानामपि दुर्लभः।
निवेदनीयः कस्यापि न कदाचिदिति ब्रुवे ॥१॥

यह देवताओं के लिए भी दुर्लभ योग मैंने कहा है, अतः इस योग का कथन जिस किसी से नहीं करना चाहिए ॥ १ ॥

**अथातः सम्प्रवक्ष्यामि शरीरज्ञानमुत्तमम् ।**
**येन विज्ञानमात्रेण जायते च शुभाशुभम् ॥२॥**

अब मैं उत्तम शरीर-ज्ञान का कथन कर रहा हूँ, जिसके जानने से शुभाशुभ का ज्ञान हो जाता है ॥ २ ॥

**जीवितं मरणं चैव लाभालाभं जयाजयम् ।**
**सुखदुःखं भावाभावौ गमनागमनं तथा ॥३॥**
**हिमालयसुता वै हि पृष्टवती वृषभध्वजम् ।**

जीवन, मरण, लाभ, हानि, जय, पराजय, सुख, दुःख, भाव, अभाव तथा गतागत के विषय में इस प्रकार शिव से पार्वती ने पूछा ॥ ३ ॥

**अथ पृथिव्यप्तेजोवाय्वाकाशानि तत्त्वानि, तत्र गुरोर्बृहत्प्रसादेन शास्त्राणि च, येन योगेनातीतेन त्रैलोक्यं सचराचरं जातमेव । येषां समयोगानि स्थूलसूक्ष्माणि कथ्यन्ते । स च सम्प्रेत्य चेष्टायां लक्ष्यते, तस्याः किं नाम ? तस्य च का जिज्ञासा यथावदुच्यते चाहुस्ततः पञ्चतत्त्वानि पठ्यन्ते ।**

पृथ्वी, जल, अग्नि, वायु तथा आकाश तत्त्व हैं, गुरु के अत्यधिक प्रसाद से शास्त्रों का ज्ञान तथा उपर्युक्त तत्त्वों का ज्ञान होता है, जिन ( तत्त्वों ) के सम्मिलन योग से सचराचर त्रैलोक्य उत्पन्न होता है, जिन तत्त्वों के समान योग से स्थूल तथा सूक्ष्म प्राणियों का शरीर निर्मित होता है तथा वही आकर ( मिलकर ) चेष्टा में लक्षित होता है । उसका क्या नाम है ? और उसकी क्या जिज्ञासा है ? यह सब यथावत् कहा जा रहा है, पंच-तत्त्व पढ़े जाते हैं अर्थात् पृथ्वी, जल, अग्नि, वायु एवं आकाश—ये पञ्चतत्त्व हैं ।



**सम्प्रति दूतो यदागत्य वदति, तस्य वागुदेति, पञ्चतत्त्वाक्षराणि ज्ञात्वा यस्य तत्त्वाक्षरस्य वक्त्रे तत्त्वाक्षराणि भवन्ति प्रश्नचिन्तायां स तत्त्वं जपति । यदि प्रश्नचिन्तायां पृथिवीतत्त्वाक्षराणि भवन्ति तदा पृथ्वीतत्त्वं भवति । यद्येषामधिका भवन्ति तदा पानीयतत्त्वानि भवन्ति, तत्त्वाक्षराणीत्यर्थः ।**

इस समय कोई दूत आकर कहता है, उसकी वाणी उदित होती है, तो पञ्चतत्त्वाक्षरों को जान कर मुख में जिस तत्त्वाक्षर के तत्त्वाक्षर होते हैं, प्रश्न की चिन्ता में वह उसी तत्त्व का जप करता है । यदि प्रश्न की चिन्ता में पृथ्वी के तत्त्वाक्षर हों तो पृथ्वीतत्त्व होता है । यदि इसमें जलतत्त्वाक्षर अधिक हों तो जल-तत्त्व होते हैं, यहाँ जलतत्त्व से तत्त्वाक्षर समझना चाहिए ।

**'अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ' एतानि पृथ्वीतत्त्वाक्षराणि ।**

**'ए ऐ ओ औ अं अः' एतानि जलतत्त्वाक्षराणि ।**

**'क ख ग घ ङ च छ ज झ ञ' एतानि तेजस्तत्त्वाक्षराणि ।**

**'ट ठ ड ढ ण त थ द ध न प फ ब भ म' एतानि वायुतत्त्वाक्षराणि ।**

**'य र ल व श ष स ह' एतान्याकाशतत्त्वाक्षराणि ।**

**एतानि वर्द्धितवाक्येनाधिकाक्षराणि भवन्ति ।**

'अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ' ये पृथ्वी-तत्त्वाक्षर हैं ।
'ए ऐ ओ औ अं अः' ये जल-तत्त्वाक्षर हैं ।

'क ख ग घ ङ च छ ज झ ञ' ये अग्नि-तत्त्वाक्षर हैं।
'ट ठ ड ढ ण त थ द ध न प फ ब भ म' ये वायु-तत्त्वाक्षर हैं।
'य र ल व श ष स ह' ये आकाश-तत्त्वाक्षर हैं।
यही तत्त्व बढ़े हुए वाक्य के द्वारा अधिक अक्षरों वाले हो जाते हैं।

**विविधप्रकारचिन्ताः, समविषमाक्षराणि ( पृथ्वीतत्त्वानि ) ज्ञातव्यानीति। जीवितमरणलाभालाभजयपराजयसुखदुःखगमनागमनानि च यानि समानि विषमाणि अप्तत्त्वानि निर्वाचितव्यानि। यदा चित्तं भवति कृतस्य वाक्यविषये पृथिवीविषये तदा सलिलतत्त्वाक्षराणि भवन्ति तदा स अप्तत्त्वं जपति। अप्चिन्तायां यदा पृथिवीतत्त्वाक्षराणि भवन्ति तदा पृथ्वीतत्त्वं भवति। एवमन्येष्वपि बोद्धव्यम्। अक्षराणि येन कथयति। लाभचिन्तायां तेज-आकाशाक्षराणि अधिकानि भवन्ति, तदा तेऽशुभोऽधिकतरो भविता। यदा देशात् तत्त्वाद्वा गमनादिकं तेजसः ग्रामचलिते सङ्ग्रामगमने 'अहेतु अके डके' तैजसाक्षराण्यधिकानि भवन्ति। पृथिव्यप्तेजोवाय्वाकाशा एतेषामक्षराणि विवाहकाले एतेषु तेजोऽक्षराणि शुभहारकाणि भवन्ति।**

इति श्रीशिवपार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वरमहातन्त्रे षष्ठः पटलः ॥ ६ ॥

अनेक प्रकार की चिन्ताएँ तथा सम और विषम अक्षर ( पृथ्वी तत्त्व ) जानने चाहिए। जीवन-मरण, लाभ-हानि, जय-पराजय, सुख-दुःख, गमन-आगमन तथा जो सम तथा विषम जलतत्त्व हैं, उन्हें समझना चाहिए। जब प्रश्नकर्त्ता का चित्त वाक्य अथवा पृथिवी के विषय में होता है तो उसके वाक्य में जल-तत्त्व के अक्षर होते हैं और वह तब जलतत्त्व का कथन करता है। जल विषयक चिन्ता में जब पृथिवीतत्त्व के अक्षर होते हैं तो वहाँ पृथिवी-तत्त्व होता है। इसी प्रकार अन्य में भी समझना चाहिए। जिनसे प्रश्न अथवा वाक्य कहा जाता है वही अक्षर हैं। जब लाभ की चिन्ता में अग्नि तथा आकाश के अक्षर अधिक होते हैं तब अशुभ की अधिक सम्भावना रहती है। जब देश ( स्थान ) अथवा तत्त्व से गमनादिक का प्रश्न होता है तो तेज ( अग्नि ) के अक्षर अधिक होते हैं। गाँव से चलने पर तथा युद्ध में गमन करने पर 'अहेतु अके डके' में अग्नि के अक्षर अधिक होते हैं। विवाह के समय पृथ्वी, जल, तेज, वायु तथा आकाश के अक्षर होते हैं। यदि इसमें अग्नि के अक्षर अधिक हों तो शुभ का हरण करने वाले होते हैं।

श्रीशिवपार्वतीसंवादात्मक वीरभद्रेश्वरतन्त्रोद्धृत उड्डामरेश्वरमहातन्त्र में छठा पटल समाप्त हुआ ॥ ६ ॥

## सप्तमः पटलः

॥ अथौषधीकरणं निरूप्यते ॥

**ओषधी परमा श्रेष्ठा गोपितव्या प्रयत्नतः ।**
**यस्याः प्रयोगमात्रेण देवता यान्ति वश्यताम् ॥१॥**

ओषधीकरण का निरूपण—परम श्रेष्ठ ओषधियों को प्रयत्नपूर्वक गुप्त रखना चाहिए, जिसके प्रयोग मात्र से देवता वशीभूत हो जाते हैं ॥ १ ॥

**ओषधी सा बुधैः प्रोक्ता चाण्डाली लोकविश्रुता ।**
**सुरासुरगणैः पूज्या सर्वकार्यार्थसाधिनी ॥२॥**

संसार में प्रसिद्ध वह ओषधि विद्वानों के द्वारा चाण्डाली ( शिवलिङ्गी ) नाम से कही जाती है। यह ओषधि देवताओं तथा असुरों के द्वारा पूज्य तथा सभी कार्यों को सिद्ध करने वाली है ॥ २ ॥

**एकपत्री द्विपत्री च त्रिपत्री तुर्यपत्रिका ।**
**अनेन विधिना देवि चतुश्चरणगामिनी ॥३॥**
**मानुषाणां विशेषेण वश्यकर्मणि योजिता ।**

यह चाण्डाली ओषधि एकपत्र, द्विपत्र, त्रिपत्र तथा चतुःपत्र के भेद से चार प्रकार की प्राप्त होती है। हे देवि ! इस प्रकार यह ओषधि चार चरणों से गमन करने वाली है। यह मनुष्यों को वशीभूत करने के कार्य में प्रयोजित होती है ॥ ३½ ॥

**एकपत्री तु स्वाङ्गमलसंयुक्ता स्त्रियं वशमानयति । द्विपत्री राज्ञो राजपुरुषान् । त्रिपत्री श्रीशाकमरिचसहिता**



**दुष्टां चमूं वशमानयति । चतुष्पत्री च कन्दुसहिता मत्तदुष्टगजं वशमानयति ।**

एक पत्र वाली चाण्डाली ओषधि अपने अङ्ग के मल के साथ जिस स्त्री को खाने हेतु दी जाती है, वही स्त्री वश्य हो जाती है। द्विपत्र वाली ओषधि राजा तथा राजपुरुषों को वशीभूत कर देती है। त्रिपत्र वाली ओषधि श्रीशाक तथा काली मिर्च के साथ देने से दुष्ट सेना को वशीभूत कर देती है तथा चार पत्र वाली चाण्डाली ओषधि सुपारी के साथ मतवाले दुष्ट हाथी को भी वशीभूत कर देती है।

॥ अथोत्पाटनविधिः कथ्यते ॥

**शनिवारे शुचिर्भूत्वा सायं सन्ध्यादिकं विधाय गन्धपुष्पधूपदीपनैवेद्यादिभिः पञ्चोपचारैः पूजादिकं विधाय अक्षतं फलं हस्ते गृहीत्वा ओषधिसमीपे स्थित्वाऽभिमन्त्रणं कुर्यात् । ततोऽनुदिते भानौ खदिरकाष्ठकीलकेन खनयेत् ।**

॥ तत्र मन्त्रः ॥

**येन त्वां खनते ब्रह्मा हृषीकेशो महेश्वरः ।**
**शचीपतिः पितृपतिर्जलेशश्च धनाधिपः ॥**
**तेन त्वां खनयिष्यामि तिष्ठ तिष्ठ महौषधि ।**

**इति पठित्वा खनयेत् ।**

ओषधि को उखाड़ने की विधि बतलाते हैं—शनिवार को पवित्र होकर सायंकाल सन्ध्यादि कार्य करके गन्ध, पुष्प, धूप, दीप नैवेद्य आदि से पञ्चोपचार के द्वारा पूजन करके अक्षत तथा सुपारी आदि फल हाथ में लेकर ओषधि के समीप स्थित होकर अभिमन्त्रण करें। तत्पश्चात् दूसरे दिन सूर्य उदय होने से पूर्व कत्थे की लकड़ी

की कील से खोदे। वहाँ यह मन्त्र पढ़ना चाहिए—"येन त्वां ···· ···· महौषधि।" इस मन्त्र को पढ़ कर खोदे।

**शुचिरारभ्य एकान्ते प्रभाते मन्त्रमुक्तितः ॥४॥**
**सङ्ग्राह्यमौषधं सिद्ध्यै न भवन्ति हि काष्ठवत्।**

॥ मन्त्रः ॥

**नमोऽस्त्वमृतसम्भूते बलवीर्यविवर्द्धनि ॥५॥**
**बलमायुश्च मे देहि पापं मे नय दूरतः।**

पवित्र रह कर एकान्त में प्रातःकाल कहे गये मन्त्र से सिद्धि की प्राप्ति हेतु औषधि का सङ्ग्रहण करना चाहिए। ऐसी औषधियाँ काष्ठ के समान नहीं होती हैं। इस लिखित मन्त्र से ओषधि की प्रार्थना करनी चाहिए—"नमोऽस्त्वमृतसम्भूते······ ······पापं मे नय दूरतः॥"

**येन चानेन मन्त्रेण खनित्वोत्पाट्यमानं कृत्वा यः पूर्वमानीतो योऽन्यथा न भवेत्।**

॥ मन्त्रः ॥

**अत्रैव तिष्ठ कल्याणि मम कार्यकरी भव ॥६॥**
**मम कार्ये कृते सिद्धे इतस्त्वं हि गमिष्यसि।**

इस प्रकार इस मन्त्र से खोद कर उखाड़े, जिससे पूर्व लायी गयी ओषधि व्यर्थ नहीं होती है। इस अग्रलिखित मन्त्र से उसे स्थिर करना चाहिए—"अत्रैव······ ······गमिष्यसि॥"

॥ मन्त्रः ॥

**"ॐ ह्रीं रक्तचामुण्डे हूं फट् स्वाहा।"**

**अनेन मन्त्रेण पुष्यर्क्षे हस्तर्क्षे वा नक्षत्रे सर्वाश्चौषध्य उत्पाटनीयाः। यैर्नरैश्च उदिते भानौ ओषध्यः खन्यन्ते उत्पाट्यन्ते उत्पद्यन्ते वा, तासां रविकिरणपीतप्रभावेनावीर्यप्रभावा भवन्ति। सिद्धिकारिका न भवन्ति। यद्युदिते भास्करे उत्पाट्यन्ते, तदा तासां पूजा कर्त्तव्या। जपारक्तोत्पलरक्तकरवीररक्तचन्दनकुङ्कुमेन गव्यगोमयेन सपादहस्तभूमिं संलिप्य तन्मध्ये चतुरस्रं कारयेत्। रक्तचन्दनकुङ्कुमाभ्यां तन्मध्ये वर्तुलं वितस्तिमात्रं भानुं पूजयेत्। पार्श्वे चन्द्रादिग्रहान् पूजयेत्। ततो रक्तभक्तपुष्परक्तैर्वक्ष्यमाणमन्त्रेण बलिं दद्यात्।**



इसके अतिरिक्त "ॐ ह्रीं रक्तचामुण्डे हूँ फट् स्वाहा" मन्त्र से पुष्य या हस्त नक्षत्र में रविवार को सभी ओषधियाँ उखाड़नी चाहिए। जो मनुष्य सूर्योदय पर ओषधियाँ खोदते, उखाड़ते अथवा उखाड़ कर लाते हैं, तो उन ओषधियों का प्रभाव सूर्य की किरणों के द्वारा पी लेने पर वे अवीर्य प्रभाव वाली हो जाती हैं। अर्थात् उनका प्रभाव नष्ट हो जाता है। वे सिद्धिकारक नहीं होती। यदि सूर्योदय पर ओषधि उखाड़ी जाय, तब उनकी पूजा करनी चाहिए। गुड़हल ( The china rose ), लाल कमल, लाल कनेर ( Red Nerium oderum ) तथा लाल चन्दन एवं केशर के द्वारा गाय के गोबर से डेढ़ हाथ भूमि लीप कर उसके मध्य में चौकोर मण्डल बनावे। रक्तचन्दन तथा केशर से मध्य में गोलाकार एक वितस्ति मात्र परिमाण में सूर्य को बनाकर उसका पूजन करे। पार्श्वों में चन्द्र आदि ग्रहों की पूजा करनी चाहिए। तत्पश्चात् लाल चावल के भात और लाल फूलों से, कहे गये इस मन्त्र से बलिदान करे—

॥ मन्त्रः ॥

**"ॐ द्रां द्रीं द्रूं द्रैं द्रौं द्रः सः स्वाहा।**

**अनेन मन्त्रेण पूजां कृत्वोत्पाटयेत्, वीर्ययुक्ता भवति सर्वकार्यक्षमा भवति ।**

इति श्रीशिवपार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वर-महातन्त्रे चाण्डालीमहौषधिवर्णनं सप्तमः पटलः ।।७।।

"ॐ द्रां द्रीं द्रूं द्रैं द्रौं द्रः सः स्वाहा।" इस मन्त्र से पूजन, बलिदान करके ओषधि का उत्पाटन करे तो वह ओषधि प्रभाव ( वीर्य ) युक्त तथा सर्वकार्यकारिणी होती है ।

श्री शिवपार्वतीसंवादात्मक वीरभद्रेश्वरतन्त्रोदधृत उड्डा-
मरेश्वरमहातन्त्र में चाण्डाली महौषधि
वर्णन नामक सप्तम पटल
समाप्त हुआ ।।७।।

चतुरस्र-मण्डल

पूर्व

| | | | | |
|---|---|---|---|---|
| | बुध | शुक्र | चन्द्र | |
| उत्तर | गुरु | सूर्य | भौम | दक्षिण |
| | केतु | शनि | राहु | |

पश्चिम



# अथाष्टमः पटलः

।। अथ गर्भधारणविधानम् ।।

**अथान्यत् सम्प्रवक्ष्यामि नारीणां गर्भधारणम् ।**

**पद्मबीजं गव्यपयसा सह या नारी पिबति सा गर्भवती भवति सत्यमेव । आदित्यवारे निमन्त्रयेत्, चन्द्रवारे भक्षयेत् । पूर्वदिग्भागस्थितं शिरीषमूलं गव्यघृतेन सह ऋतुसमये भक्षयेत् सा संवत्सरेण गर्भवती भवति ।**

गर्भधारण विधान—अब इसके पश्चात् स्त्रियों के गर्भधारण विधान को कह रहा हूँ ।

कमल के बीजों को गाय के दूध के साथ जो नारी पान करती है, वह गर्भवती होती है। यह सत्य है। कमल-बीजों को रविवार के दिन निमन्त्रित करना चाहिए तथा सोमवार को लाकर भक्षण कराना चाहिए। जो स्त्री पूर्व दिशा के भाग में स्थित सिरसे ( Acacia Sirissa ) की जड़ को गाय के घृत के साथ ऋतुकाल में भक्षण करती है, वह एक वर्ष में अवश्य गर्भवती होती है ।

**अनपत्या च या नारी कपित्थं भक्षयेत् सदा ।**
**अभिमन्त्र्य तु मन्त्रेण सापि पुत्रवती भवेत् ।।१।।**

सन्तान-रहित जो स्त्री मन्त्र से अभिमन्त्रित करके कैथ (Feronia Elephantum) के फल का भक्षण करती है वह अवश्य ही पुत्रवती होती है।। १ ।।

**एकवृक्षतटे नारी स्नानं कृत्वाऽभिमन्त्रयेत् ।**
**आदिवन्ध्यापि देवेशि भवेद्गर्भवती हि सा ।।२।।**

देवः शिवो भवेद्यत्र नदीसङ्गमसन्निधौ ।
तस्यां नद्यां दिशि स्नात्वा वन्ध्या पुत्रवती भवेत् ॥३॥

कपित्थ ( कैथ ) के भक्षण की विधि यह है कि स्त्री अकेले नदी-संगम पर जहाँ भगवान् शिव का मन्दिर हो, वहाँ नदी के प्रत्येक दिशा में स्नान करके एक वृक्ष के नीचे कैथ के फल को अभिमन्त्रित करे। तत्पश्चात् उसका भक्षण करे तो ऐसा करने से आदिवन्ध्या भी पुत्रवती हो जाती है ॥ २-३ ॥

**विधिरत्रोच्यते—**

कपिलागोमयेनाथ भूमिं संलिप्य यत्नतः ।
स्नात्वा विधिप्रकारेण मण्डलं कारयेत्ततः ॥४॥

यहाँ पूजा विधि का कथन किया जाता है—

यत्नपूर्वक कपिला ( पीली ) गाय के गोबर से भूमि को लीप कर स्नान करके विधिपूर्वक मण्डल का निर्माण करे ॥ ४ ॥

चतुरस्रं चतुष्कोणं तन्मध्ये वर्तुलं स्मृतम् ।
तन्मध्ये विलिखेत् पश्चादष्टपत्रं सकर्णिकम् ॥५॥

सर्वप्रथम चौकोर मण्डल बनावे, चारों ओर चार कोणों का निर्माण करते हुए मध्य में वृत्त बनायें। तत्पश्चात् वृत्त के मध्य में कर्णिका-युक्त अष्टदल कमल बनाये ॥ ५ ॥

मध्ये तु पूजयेद्देवं पत्रे शक्तिं प्रपूजयेत् ।
निर्व्रणमण्डलस्याग्रे कमलं स्थापयेद् बुधः ॥६॥

इस मण्डल के मध्य में देव ( शिव ) का पूजन करें तथा अष्टदलों में आठ शक्तियों—ब्राह्मी, माहेश्वरी, ऐन्द्री कौमारी, वैष्णवी,



वाराही तथा नारसिंही का पूजन करें। विद्वान् को चाहिए कि अक्षत मण्डल के अग्र भाग में एक कमल की स्थापना करके उस पर कलश स्थापित करें ॥ ६ ॥

## ॥ मण्डल ॥



शिखिपत्रनखवर्णेन लिखेत् । श्रृङ्गता कुलसप्तपर्वत-मृत्तिका·········? स्वमलामृत्तिका वलमीकमृत्तिका निम्बमूल-मृत्तिका सुवर्णरजतताम्रकांस्यसहस्रमूलं सर्वतीर्थानि, समुद्राः सरितः सर्वा सर्वौषधयः सर्वदेवताः सर्वसिद्धयः सर्वयोगिन्यः सर्वे गिरयः सर्वे नागाः पञ्चजात्यानि फलानि पञ्चप्रकारा-क्षतानि पञ्चसुवर्णपुष्पाणि स्थिरचित्तेन मन्त्रितकलशे परिक-ल्पयेत् ।

॥ अथ श्मशानासाधनम् ॥

चतुर्लक्षमिमं मन्त्रं श्मशाने प्रजपेच्छुचिः ।
नग्नव्रतोऽञ्जनं तुष्टा श्मशाने सम्प्रयच्छति ॥२७॥
तेन पश्येन्नरोऽदृश्यो विचरेद्वसुधातले ।
निधिं पश्यति गृह्णाति न विघ्नैः परिभूयते ॥२८॥

॥ मन्त्रः ॥

ॐ द्रां द्रीं श्मशानवासिनि स्वाहा ।

अथ श्मशाना साधन—पवित्र होकर नग्नव्रत धारण करके साधक श्मशान में "ॐ द्रां द्रीं श्मशानवासिनि स्वाहा" इस मन्त्र का चारलाख जप करें तो प्रसन्न होकर देवी श्मशान में अञ्जन प्रदान करती हैं, उससे साधक पृथ्वी पर विचरण करता हुआ मनुष्यों के द्वारा देखा नहीं जाता है। पृथ्वी में गड़ी निधि को वह साधक देख लेता है और उसे ग्रहण कर लेता है। वह साधक विघ्नों से पराजित नहीं होता है ॥२७-२८॥

॥ अथ वटयक्षिणीसाधनम् ॥

त्रिपथस्थो वटाधःस्थो रात्रौ मौनी जपेत्तु वै ।
लक्षत्रयं ततः सिद्धा देवी स्याद् वटयक्षिणी ॥२९॥
वस्त्रालङ्करणं दिव्यं रससिद्धिं रसायनम् ।
दिव्याञ्जनं च संतुष्टा साधकस्य प्रयच्छति ॥३०॥

॥ मन्त्रः ॥

ॐ श्रीं द्रीं वटवासिनि यक्षकुलप्रसूते वटयक्षिणि एह्येहि स्वाहा ।



अथ वटयक्षिणी साधन—जहाँ तीन रास्ते मिल रहे हों वहाँ स्थित बरगद वृक्ष के नीचे रात्रि में मौन धारण करके "ॐ श्रीं द्रीं ...... एह्येहि स्वाहा" इस मन्त्र का तीन लाख जप करें तो वटयक्षिणी देवी सिद्ध हो जाती हैं, तब देवी वस्त्र, अलंकार, दिव्य रसों की सिद्धि तथा रसायन और दिव्य अञ्जन साधक को प्रदान करती हैं ॥२९-३०॥

॥ अथ मदनमेखलासाधनम् ॥

मधूकवृक्षतले मन्त्रं चतुर्दशदिनावधि ।
प्रजपेन्मेखला तुष्टा ददात्यञ्जनमुत्तमम् ॥३१॥

॥ मन्त्रः ॥

ॐ द्रीं हुं मदनमेखलायै मदनविडम्बनायै नमः स्वाहा ।

अथ मदनमेखला साधन—"ॐ द्रीं हुं ... नमः स्वाहा" इस मन्त्र को चौदह दिन तक एक लाख जप करें तो मदनमेखला प्रसन्न होकर उत्तम अञ्जन प्रदान करती है ॥३१॥

॥ अथ विकलासाधनम् ॥

गुहान्तःस्थोऽधरे मासत्रयं मन्त्रं जपेन्नरः ।
ततः सिद्धा भवेद् देवि विकला वाञ्छितप्रदा ॥३२॥

॥ मन्त्रः ॥

ॐ विकले ऐं ह्रीं श्रीं क्लीं स्वाहा ।

अथ विकला साधन—पर्वत की निचली गुफा के अन्तर्गत स्थित होकर साधक तीन मास तक "ॐ विकले ऐं ह्रीं श्रीं क्लीं स्वाहा" इस मन्त्र का तीन लाख जप करें तो इष्ट प्रदान करने वाली विकला यक्षिणी सिद्ध होती हैं ॥३२॥

॥ अथ लक्ष्मीसाधनम् ॥

**स्वगृहावस्थितो रक्तैः प्रसूनैः करवीरजैः ।**
**लक्षमावर्तयेन् मन्त्री दूर्वाज्याभ्यां दशांशतः ॥३३॥**
**होमे कृते भवेत् सिद्धा लक्ष्मीनाम्नी च यक्षिणी ।**
**रसं रसायनं दिव्यं निधानं च प्रयच्छति ॥३४॥**

॥ मन्त्रः ॥

**ॐ ऐं ह्रीं श्रीं लक्ष्मि कमलधारिणि हं सः सो हं स्वाहा ।**

अथ लक्ष्मी साधन—साधक अपने घर में स्थित होकर एक लाख "ॐ ऐं ह्रीं श्रीं.........सो हं स्वाहा" मन्त्र का जप करें तथा लाल कनेर के पुष्प एवं दुर्वा तथा घृत से दशांश हवन करें। होम करने पर लक्ष्मी नामक यक्षिणी सिद्धप्रद होती हैं तथा रस, रसायन एवं दिव्य (धन का) भण्डार प्रदान करती हैं ॥३३-३४॥

॥ अथ मालिनीसाधनम् ॥

**चतुष्पथस्थितो लक्षमापदि प्रजपेन्मनुम् ।**
**मालिनी जायते सिद्धा दिव्यं खड्गं प्रयच्छति ॥३४॥**
**यत्प्रभावेन लोकेऽस्मिन् दुर्लभं राज्यमाप्नुयात् ।**

॥ मन्त्रः ॥

**ॐ द्रीं ॐ नमो मालिनि स्त्रि एह्येहि सुन्दरि हंसहंसि समीहं मे सङ्गमय स्वाहा ।**

अथ मालिनी साधन--शत्रु आदि के द्वारा विपन्न करने पर साधक "ॐ द्रीं ॐ नमो......मे सङ्गमय स्वाहा" इस मन्त्र को चौराहे पर बैठ



कर एक लाख जप करें तो मालिनी यक्षिणी सिद्ध होकर दिव्य खड्ग प्रदान करती हैं, जिसके प्रभाव से इस संसार में दुर्लभ राज्य को प्राप्त कर लेता है ॥३४॥

॥ अथ शतपत्रिकासाधनम् ॥

**शतपत्रवने यस्तु मन्त्रलक्षं जपेन्मुनिः ।**
**क्षीराज्यहोमैः संसिद्धा सिद्धिं यच्छति भूनिधिम् ॥३५॥**

॥ मन्त्रः ॥

**ॐ द्रीं शतपत्रिके द्रीं द्रीं श्रीं स्वाहा ।**

अथ शतपत्रिका साधन--जो कमल के समूह में बैठ कर मौन धारण करके "ॐ द्रीं शत-पत्रिके द्रीं द्रीं श्रीं स्वाहा" लक्षमन्त्र का जप करे तथा दूध, घृत से हवन करने पर शतपत्रिका यक्षिणी सिद्ध होकर पृथ्वी की निधि प्रदान करती हैं ॥३५॥

॥ अथ सुलोचनासाधनम् ॥

**नदीतीरस्थितो लक्षत्रयं मन्त्री जपेन्मनुम् ।**
**घृतहोमे दशांशेन कृते देवी प्रसीदति ॥३६॥**

अथ सुलोचना-साधन--मन्त्र-साधक "ॐ द्रीं क्लीं ......देहि देहि स्वाहा" इस मन्त्र को नदी के किनारे स्थित रह कर तीन लाख जप करे, दशांश घृत से होम करने पर देवी प्रसन्न होती हैं ॥३६॥

**ददाति पादुकां तस्मै यथारुचि नभस्तले ।**
**मनःपवनवेगेन याति चायाति साधकः ॥३७॥**

॥ मन्त्रः ॥

**ॐ द्रीं क्लीं सुलोचने सिद्धिं मे देहि देहि स्वाहा ।**

साधक को पादुका प्रदान करती है जिससे इच्छानुसार साधक आकाश में मन एवं पवन के वेग से गमनागमन करता है ॥३७॥

॥ अथ शोभनासाधनम् ॥

**रक्ताम्बरधरो मन्त्री चतुर्दशदिनावधि ।**
**जपेत् सिद्धा भवेद् देवी शोभना भोगदायिनी ॥३८॥**

॥ मन्त्रः ॥

**ॐ द्रीं अशोकपल्लवकरतले शोभने श्रीं क्षः स्वाहा ।**

अथ शोभना-साधन – साधक रक्तवस्त्र धारण करके चौदह दिनों तक "ॐ द्रीं ...... श्रीं क्षः स्वाहा" इस मन्त्र का जप करे तो भोगदायिनी शोभना सिद्ध हो जाती हैं ॥३८॥

॥ अथ कपालिनीसाधनम् ॥

**महाव्रतधरो मन्त्री यः शाल्योदनभोजनैः ।**
**लक्षद्वयं जपेन्मन्त्रं कपालं लभते मुनिः ॥३९॥**
**आकाशगमनं दूरात् स्वप्नरूपसमागमः ।**
**दूराद्दर्शनमित्यादि साधकाय प्रयच्छति ॥४०॥**

॥ मन्त्रः ॥

**ॐ ऐं कपालिनि द्रां द्रीं क्लां क्लीं क्लूं क्लैं क्लौं क्लः हूं सः सोहं सकलह्रीं फट् स्वाहा ।**

अथ कपालिनी साधन—जो साधक, महाव्रत को धारण करके चावल (खीर) का भोजन करते हुए मौन रखकर दो लाख "ॐ ऐं कपालिनि ...... सोहं सकल ह्रीं फट् स्वाहा" इस मन्त्र का जप करे, तो साधक को एक कपाल की प्राप्ति होती है, जिससे दूर से ही स्वप्न रूप समागम होता है तथा आकाश-गमन होता है। साधक को दूर से ही देवी दर्शन प्रदान करती हैं ॥३९-४०॥

॥ अथ विशालिनीसाधनम् ॥

**सरित्तीरे जपेन्मन्त्रमर्धं लक्षस्य देशिकः ।**
**घृताक्तगुग्गुलैर्होमे देवी सौभाग्यदा भवेत् ॥४१॥**



॥ मन्त्रः ॥

**ॐ वरयक्षिणि वरयक्ष विशालिनि आगच्छ आगच्छ प्रियं मे भवतु हैमे भव स्वाहा ।**

अथ विशालिनी साधन—साधक नदी के किनारे ५० हजार "ॐ वरयक्षिणी ...... भव स्वाहा" इस मन्त्र का जप करें तथा घृत से युक्त गुग्गुल का हवन करें तो देवी सौभाग्य प्रदान करती हैं ॥४१॥

॥ अथ नटीसाधनम् ॥

**पुण्याशोकतलं गत्वा चन्दनेन सुमण्डलम् ।**
**कृत्वा चाभ्यर्चयेद् देवीं धूपं दत्त्वा सहस्रकम् ॥४२॥**
**मन्त्रमाराधयेन्मासं नक्तंभोजी रहः सदा ।**
**रात्रौ पूजां शुभां कृत्वा जपेन्मन्त्रं मुनिव्रतः ॥४३॥**
**नटी देवी समागत्य निधानं रसमञ्जनम् ।**
**ददाति मन्त्रिणे मन्त्रं दिव्ययोगं च सिद्धिदम् ॥४४॥**

॥ मन्त्रः ॥

**ॐ द्रीं नटि महानटि रूपवति द्रीं स्वाहा ।**

अथ नटी साधन—पवित्र अशोक वृक्ष के नीचे जाकर चन्दन से मण्डल का निर्माण करके धूप देकर देवी की पूजा करे और "ॐ द्रीं नटि महानटि रूपवति द्रीं स्वाहा" सहस्र मन्त्र का जप एक महीने तक सदा एकान्त में रहकर करें और रात्रि में भोजन करें। रात्रि में पुनः शुभ पूजा करके मौन रहकर मन्त्र का जप करें तो नटी देवी आकर साधक को रस, अञ्जन तथा निधि-भण्डार प्रदान करती हैं एवं सिद्धिप्रद दिव्य योग देती हैं ॥४२-४४॥

॥ अथ कामेश्वरीसाधनम् ॥

**एकासने शुचौ देशे त्रिसन्ध्यं त्रिसहस्रकम् ।**
**मासमेकं जपेन्मन्त्रं तदा पूजां समारभेत् ॥४५॥**

पुष्पैर्धूपैश्च नैवेद्यैः प्रदीपैर्घृतपूरितैः ।
रात्रौ देवीं समभ्यर्च्य जपेन्मन्त्रं प्रसन्नधीः ॥४६॥
अर्धरात्रे गते देवी समागत्य प्रयच्छति ।
रसं रसायनं दिव्यं वस्त्रालङ्करणानि च ॥४७॥

॥ मन्त्रः ॥

ॐ ह्रीं आगच्छ आगच्छ कामेश्वरि स्वाहा ।

अथ कामेश्वरी साधन एक आसन पर बैठ कर पवित्र स्थान में तीनों सन्ध्याओं में "ॐ ह्रीं आगच्छ आगच्छ कामेश्वरि स्वाहा" इस मन्त्र का तीन हजार एक मास तक जप करें और पूजा का आरम्भ करें ॥४५॥

प्रसन्न बुद्धि से पुष्प, धूप, नैवेद्य तथा घृतयुक्त दीपकों के द्वारा रात्रि में देवी की अर्चना करके मन्त्र का जप करना चाहिए तो अर्ध-रात्रि में देवी आकर रस, रसायन, दिव्य वस्त्र एवं गहने प्रदान करती हैं ॥४६-४७॥

॥ अथ स्वर्णलेखसुरसुन्दर्योः साधनम् ॥

स्वर्णलेखा ( स्वर्णरेखा ) सुरसुन्दरी च प्रागुक्ता ।

अथ स्वर्णलेखा तथा सुरसुन्दरी साधन—स्वर्णलेखा (स्वर्णरेखा) तथा सुरसुन्दरी का साधन पहले कहा जा चुका है ।

॥ अथ मनोहरासाधनम् ॥

नदीतीरे शुभे रम्ये चन्दनेन सुमण्डलम् ।
विधाय पूजयेद् देवीं ततो मन्त्रायुतं जपेत् ॥४८॥
एकविंशतिघस्रान्तं प्रसन्ना वितरेत् सदा ।
अर्धरात्रे गते देवी दीनाराणां सहस्रकम् ॥४९॥



ददाति प्रत्यहं तस्मै व्ययं कुर्याद् दिने दिने ।
तद्व्ययाभावतो भूयो न ददाति प्रकुप्यति ॥५०॥

॥ मन्त्रः ॥

ॐ ह्रीं सर्वकामदे मनोहरे स्वाहा ।

अथ मनोहरा साधन—पवित्र तथा सुन्दर नदी के तट पर चन्दन (रक्त) से मण्डल का निर्माण करें और देवी की पूजा करके "ॐ ह्रीं सर्वकामदे मनोहरे स्वाहा" १० हजार मन्त्र का जप करें । २१ दिनों तक अनुष्ठान करने से प्रसन्न देवी आधी रात में सहस्र दीनार प्रदान करती हैं । इन्हें प्रतिदिन व्यय कर देना चाहिए । सहस्र दीनार का प्रतिदिन व्यय न करने से देवी पुनः दीनार नहीं प्रदान करती हैं और क्रोधित हो जाती हैं ॥४८-५०॥

॥ अथ प्रमोदासाधनम् ॥

अर्धरात्रे समुत्थाय सहस्रं प्रजपेन्मनुम् ।
मासमेकं ततो देवी निधिं दर्शयति ध्रुवम् ॥५१॥

॥ मन्त्रः ॥

ॐ ह्रीं प्रमोदायै स्वाहा ।

अथ प्रमोदा साधन—साधक "ॐ ह्रीं प्रमोदायै स्वाहा" मन्त्र को अर्द्धरात्रि में उठकर सहस्र बार जप करें । ऐसा एक मास तक नित्य करें तो देवी निश्चितरूपेण निधि का दर्शन करा देती हैं ॥५१॥

॥ अथानुरागिणीसाधनम् ॥

कुङ्कुमेन समालिख्य भूर्जे देवीं सुलक्षणाम् ।
प्रतिपत्तिथिमारभ्य धूपदीपादिभिर्वराम् ॥५२॥

कृत्वा देवीं सहस्रञ्च त्रिसन्ध्यं परिवर्तयेत् ।
माससमेकं ततः पूजां रात्रौ कृत्वा पुनर्जपेत् ॥५३॥

अर्धरात्रे गते देवी समागत्य प्रयच्छति ।
दीनाराणां सहस्रं कं प्रत्यहं परितोषिता ॥५४॥

॥ मन्त्रः ॥

ॐ अनुरागिणि मैथुनप्रिये यक्षकुलप्रसूते स्वाहा ।

अथ अनुरागिणी साधन--कुङ्कुम के द्वारा भोजपत्र पर सुन्दर लक्षणवाली देवी का चित्र बनाकर धूप, दीप आदि के द्वारा प्रतिपदा तिथि से आरम्भ करके देवी की पूजा करके तीनों सन्ध्याओं में "ॐ अनुरागिणि ...स्वाहा" सहस्र मन्त्र का जप करें। इसी प्रकार एक मास तक पूजा करते हुए रात्रि में पुनः मन्त्र का जप करें तो प्रत्येक दिन प्रसन्न देवी अर्धरात्रि में आकर सहस्र दीनार प्रदान करती हैं।।५२-५४॥

॥ अथ नखकेशिकासाधनम् ॥

गत्वा पक्षिगृहं मन्त्री नखकेशैः प्रपूजयेत् ॥५५॥
दिनैकविंशतिर्यावत् पूजां कृत्वा ततो निशि ।
आवर्तयेदेकचित्तो मन्त्री मन्त्रं सुसंयतः ॥५६॥
निशार्धे वाञ्छितं कार्यं देव्यागत्य प्रयच्छति ।

॥ मन्त्रः ॥

ॐ ह्रीं नखकेशिके स्वाहा ।

अथ नखकेशिका साधन--साधक पक्षि-गृह (घोंसले) में जाकर नख तथा बालों से देवी की पूजा करें। २१ दिनों तक रात्रि में पूजा करके संयत और एकचित्त से "ॐ ह्रीं नखकेशिके स्वाहा" इस मन्त्र



का जप करें तो देवी आधी रात में आकर वाञ्छित कार्य सिद्ध करती हैं ॥५५-५६॥

॥ अथ भामिनीसाधनम् ॥

दिनत्रयमनाहारी सोमसूर्यग्रहे सति ॥५७॥
स्पर्शाद् विमुक्तिपर्यन्तं जपेत् तद्गतमानसः ।

ततः प्रसन्ना सा देवी यच्छत्यञ्जनमुत्तमम् ॥५८॥
तेनाञ्जितो नरोऽदृश्यं निधिं पश्यति भूगतम् ।

॥ मन्त्रः ॥

ॐ ह्रीं यक्षिणि भामिनि रतिप्रिये स्वाहा ।

अथ भामिनी साधन--तीन दिन तक बिना भोजन के रहकर चन्द्रमा तथा सूर्य के ग्रहण में स्पर्श से मुक्ति पर्यन्त देवी का मन से ध्यान करते हुए "ॐ ह्रीं यक्षिणि भामिनि रतिप्रिये स्वाहा" इस मन्त्र का जप करें तो प्रसन्न होकर देवी अञ्जन प्रदान करती हैं। उससे अञ्जित नेत्रों वाला मनुष्य अदृश्य हो जाता है तथा पृथिवी में स्थित निधि दृष्टिगत होती है ॥५७-५८॥

॥ अथ पद्मिनीसाधनम् ॥

पद्मिनी प्रागुक्ता ।

अथ पद्मिनी साधन—पद्मिनी यक्षिणी का साधन पहले कहा जा चुका है।

॥ अथ स्वर्णावतीसाधनम् ॥

वटवृक्षतले कृत्वा चन्दनेन सुमण्डलम् ॥५९॥
यक्षिणीं पूजयित्वा तु नैवेद्यमुपदर्शयेत् ।
शशमांसं घृतं क्षीरं मन्त्रमावर्तयेत्ततः ॥६०॥

दिने दिने सहस्त्रं कं यावत्सप्तदिनं भवेत् ।
अथागत्य सदा तस्मै मन्त्रमञ्जनमुत्तमम् ॥६१॥
यत्प्रभावान्तरे सर्वं पश्येन्निधिमशङ्कितः ॥

॥ मन्त्रः ॥

ॐ ह्रीं आगच्छ आगच्छ स्वर्णावति स्वाहा ।

अथ स्वर्णावती साधन--साधक बरगद वृक्ष के नीचे जाकर लाल चन्दन से मण्डल का निर्माण करे और यक्षिणी की पूजा करके खरगोश का मांस, घृत, क्षीर (खीर) का नैवेद्य प्रदान करे एवं प्रतिदिन एक-एक हजार "ॐ ह्रीं आगच्छ आगच्छ स्वर्णावति स्वाहा" इस मन्त्र का सात दिन तक जप करे तो स्वर्णावती आकर साधक को उत्तम अञ्जन प्रदान करती हैं, जिसके प्रभाव से बिना शङ्का के साधक सम्पूर्ण निधि को देख लेता है ॥५९-६१॥

॥ अथ रतिप्रियासाधनम् ॥

शङ्खलिप्तपटे यस्माद् देवीं गौरीं धृतोत्पलाम् ॥६२॥
सर्वालङ्कारिणीं दिव्यां समालिख्यार्चयेन्नरः ।
जातीपुष्पैः प्रपूज्याथ सहस्त्रं परिवर्तयेत् ॥६३॥
सप्ताहं मन्त्रवित् तस्याः कुर्यादर्चां शुभां ततः ।
अर्धरात्रे गते देवी समागत्य प्रयच्छति ॥६४॥
पञ्चविंशतिदीनारान प्रत्यहं परितोषिता ।
वाञ्छितं मनसस्तस्मै मन्त्रज्ञाय न संशयः ॥६५॥

॥ मन्त्रः ॥

ॐ ह्रीं रतिप्रिये स्वाहा ।

इति श्रीशिव-पार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धते उड्डामरेश्वर-महातन्त्रे यक्षिणीसाधनं नाम नवमः पटलः ॥९॥



अथ रतिप्रिया साधन— शंखचूर्ण से पुते हुए वस्त्र पर कमल को धारण करने वाली, गौरवर्ण तथा सभी अलंकारों से युक्त दिव्य देवी का चित्र बनाकर चमेली के पुष्पों से उनका पूजन करें और मन्त्रवित् एक सप्ताह तक शुभार्चा करते हुए नित्य "ॐ ह्रीं रतिप्रिये स्वाहा" इस सहस्र मन्त्र का जप करे तो अर्धरात्रि में देवी आकर प्रसन्न होकर प्रतिदिन २५ दीनार प्रदान करती है ॥६२-६५॥

श्रीशिवपार्वतीसंवादात्मक वीरभद्रेश्वरतन्त्रोद्धृत उड्डा-मरेश्वरमहातन्त्र में यक्षिणीसाधन नामक नवम पटल समाप्त हुआ ॥९॥

# दशमः पटलः

**तत्र चेटकसाधनम् । अथ चेटका लिख्यन्ते—**

**कामातुरेण चित्तेन निशि मन्त्रं जपेत्सदा ।**
**जप्तोऽवश्यं वश्यकरो मन्त्रोऽयं नात्र संशयः ॥१॥**

॥ मन्त्रः ॥

**ओं ऐं स्कीं क्लीं क्लीं सहवल्लरि क्लीं कामपिशाच क्लीं ह्रीं कामपिशाच अमुकीं कामिनीं कामयाम्यहं तां कामेन ग्राह्य ग्राह्य स्वप्ने मम रूपे नखैर्विदारय विदारय द्रावय द्रावय अस्त्रेण बन्धय बन्धय श्रीं फट् स्वाहा ।**

यहाँ चेटक-साधन कहा जा रहा है। चेटकमन्त्रों का निरूपण किया जा रहा है--

रात्रि में कामातुरचित से सदा "ओं ऐं स्कीं क्लीं क्लीं""श्रीं फट् स्वाहा" इस मन्त्र को जपना चाहिए, यह स्त्रियों के लिए वश्यकारी मन्त्र है, इसमें संशय नहीं करना चाहिए। 'अमुकी' के स्थान पर अभिलषित स्त्री का नाम लेना चाहिए।

॥ अथ मृतकोत्थापनमन्त्रः ॥

**जपेन्मासत्रयं मन्त्रं कम्बलः सुप्रसन्नधीः ।**
**मृतकोत्थापनं कुर्यात् प्रतिमां चालयेत्तथा ॥२॥**

॥ मन्त्रः ॥

**सदारक्तकम्बल महादेवदूत मृतकमुत्थापय उत्थापय प्रतिमां चालय चालय पर्वतान् कम्पय कम्पय लीलया विलसय विलसय ईं ईं फट् स्वाहा ।**



अथ मृतकोत्थापन मन्त्र--सुप्रसन्न बुद्धि से कम्बल के आसन पर बैठकर तीन मासों तक "सदा रक्तकम्बल महादेवदूत""फट् स्वाहा" इस मन्त्र का जप करे, तो वह साधक मृतक को उठा सकता है एवं प्रतिमा को चला सकता है ॥२॥

॥ अथाकर्षणचेटकः ॥

**चतुर्लक्षं जपेन्मन्त्रं सागरस्य तटे शुचिः ।**
**पत्रपुष्पफलादीनि करोत्याकर्षणं ध्रुवम् ॥३॥**

॥ मन्त्रः ॥

**अभय धुद्धुताकर्ष कर्मकर्त्ता सृष्टिपुत्र अमुकं आकर्षय द्रीं ।**

अथ आकर्षणचेटक मन्त्र--पवित्र होकर समुद्र के किनारे "अभय""अमुकं आकर्षय द्रीं" इस मन्त्र को चार लाख जपे तो निश्चितरूपेण पत्र, पुष्प और फल आदि का आकर्षण करने में साधक समर्थ हो जाता है ॥३॥

॥ अथमणिभद्रचेटकः ॥

**सहस्राष्टमिमं मन्त्रं जपेत् सप्तदिनावधि ।**
**प्रत्यहं मणिभद्राख्यः प्रयच्छत्येकरूप्यकम् ॥४॥**

॥ मन्त्रः ॥

**ॐ नमो मणिभद्राय नमः पूर्णभद्राय नमो महायक्षाय सेनाधिपतये मौद्धमौद्धधराय सुघटमुद्रावहे स्वाहा ।**

अथ मणिभद्रचेटक मन्त्र—"ॐ नमो मणिभद्राय नमः""स्वाहा" इस मन्त्र को सात दिन तक नित्य आठ हजार जप करे तो प्रतिदिन मणिभद्र चेटक साधक को एक रुपया देता है ॥४॥

॥ अथ स्वप्नसिद्धिखेटकः ॥

**त्रिसन्ध्यं वलिदानं च निशायां प्रजपेन्मनुम् ।**
**सहस्रं हि जपेन्नित्यं यावत् स्वप्नं प्रजायते ॥५॥**
**प्राणिनां मृत्युसमयं वदत्येव न संशयः ।**

॥ मन्त्रः ॥

**ॐ नमो भगवते रुद्राय देहि मे वचनसिद्धिविधानं पार्वतीपते ह्लां ह्लें ह्लौं ह्लः ।**

अथ स्वप्नसिद्धिचेटक मन्त्र—साधक तीनों सन्ध्याओं में वलिदान करके रात्रि में "ॐ नमो भगवते"" ह्लौं ह्लः" मन्त्र का एक सहस्र जप करे। यह जप तब तक करना चाहिए जब तक स्वप्न की सिद्धि न हो जाय तो वह निश्चय ही प्राणियों की मृत्यु समय को बता देता है ॥५॥

॥ अथ सागरचेटकः ॥

**रात्रौ रात्रौ जपेन्मन्त्रं सागरस्य तटे शुचिः ।**
**लक्षजापे कृते सिद्धो दत्ते सागरचेटकः ॥६॥**
**रत्नत्रयं तदा मौन्यं यस्मिन्मन्त्री सुखी भवेत् ।**
**सहस्रदशकं नित्यं रात्रौ मन्त्रं जपेत्सुधीः ॥७॥**
**तद्दशांशं मधुपयोमिश्रैः पद्मैश्च होमयेत् ।**

॥ मन्त्रः ॥

**ॐ नमो भगवते रुद्र देहि मे निजराशि श्रीं नमोऽस्तु ते स्वाहा ।**

अथ सागर-चेटक मन्त्र—साधक पवित्र होकर सागर के तट पर रात्रि में "ॐ नमो भगवते""स्वाहा" एक लाख मन्त्र जपे तो सागर चेटक सिद्ध हो जाता है। तत्पश्चात् सुधी साधक रात्रि में दश हजार



मन्त्र जपे तथा शहद, दूध और कमलों से दशांश हवन करे तो सागर-चेटक साधक को तीन रत्न प्रदान करता है जिससे वह मन्त्र-जापक सुखी होता है। यह सर्व विधान मौन धारण करके करना चाहिए ॥६-७॥

॥ रञ्जकमन्त्रः ॥

**ॐ ह्लीं अमुकं रञ्जय स्वाहा ।**
**अनेन मन्त्रेण सर्वजनास्तस्तु रञ्जका भवन्ति ।**

अथ रञ्जक मन्त्र—"ॐ ह्लीं अमुकं रञ्जय स्वाहा" इस मन्त्र का जप करते समय 'अमुक' के स्थान पर अभीष्ट व्यक्ति का नाम लेकर यदि जप करें तो वह व्यक्ति प्रसन्न हो जाता है ॥

॥ अथादृश्यकारिणीविद्या ॥

**निशाचरं ध्यात्वाऽऽत्मपाणिना जपनाददृश्यकारिणीं विद्यामाप्नोति ।**

॥ मन्त्रः ॥

**ॐ नमो रसाचारिणे महेश्वराय मम पर्यटने सर्वलोकलोचनि बन्धय-बन्धय देव्याज्ञापयति स्वाहा ।**

अथ अदृश्यकारिणी विद्या—राक्षस का ध्यान करके अपने हाथ से ऊपर लिखित मन्त्र "ॐ नमो रसाचारिणे""देव्याज्ञापयति स्वाहा" का जप करे तो अदृश्यकारिणी विद्या की प्राप्ति होती है।

॥ अथ नृसिंहचेटकः ॥

**सकृदुच्चारमात्रेण नृसिंहचेटकाख्यो मन्त्रो डाकिन्यादिदोषं नाशयति ।**

॥ मन्त्रः ॥

**ॐ नमो भगवते हिरण्यकशिपुबलविदारणाय त्रिभुवनव्यापकाय प्रेतपिशाचकूष्माण्डब्रह्मराक्षसयोगिनीडाकिनी-**

कुलोन्मूलनाय तद्भवाय समस्तदोषान् नाशय नाशय विसर विसर कम्पय कम्पय मथ मथ हूं हूं स्वाहा । एह्येहि रुद्र आज्ञापयति स्वाहा ।

अथ नृसिंहचेटक मन्त्र—ऊपर लिखित नृसिंहचेटक मन्त्र "ॐ नमो भगवते""रुद्र आज्ञापयति स्वाहा" का एक बार उच्चारण करने मात्र से भूत-प्रेत डाकिनी आदि के दोष को नष्ट कर देता है ।

॥ अथानिद्राकर्षणम् ॥

प्रेरकः सहस्रपादः अनिद्रामाकर्षयति ।

॥ मन्त्रः ॥

ॐ प्रेरक अमुकीं तव मण्डलं समावर्तय द्रावय दाहय संतापय ह्रौं ।

इति श्रीशिवपार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वर-महातन्त्रे यक्षिणीचेटकनिरूपणं नाम दशमः पटलः ॥१०॥

अथ अनिद्राकर्षण मन्त्र—"ॐ प्रेरक अमुकीं""संतापय ह्रौं" इस मन्त्र का जप करने से प्रेरक सहस्रपाद वाला अनिद्रा का आकर्षण करता है ।

श्रीशिवपार्वतीसंवादात्मक वीरभद्रेश्वरतन्त्रोधृत उड्डामरेश्वर-महातन्त्र में यक्षिणी-चेटकनिरूपण नामक दशम पटल समाप्त हुआ ॥ १० ॥

# एकादशः पटलः

॥ दिग्बन्धनमन्त्रः ॥

वज्रक्रोधाय महादन्ताय दशदिशो बन्ध बन्ध हूं फट् स्वाहा ।

दिग्बन्धन मन्त्र--"वज्रक्रोधाय""हूं फट् स्वाहा" मन्त्रादि प्रयोग के पूर्व इस मन्त्र से चावल या काले उड़द अभिमन्त्रित करके दशों दिशाओं में फेंकना चाहिए, इस प्रकार दिग्बन्धन करना चाहिए ।

॥ अथ योनिसङ्कोचनम् ॥

कुमुदं हरितालं च पिष्ट्वा योनिं प्रलेपयेत् ।
त्रिरात्रं पञ्चरात्रं च योनिर्भवति संयुता ॥१॥

अथ योनिसङ्कोचन प्रयोग--कुमुदिनी तथा हरिताल ( Panicum Dactylon ) पीस कर तीन रात्रि अथवा पाँच रात्रियों तक लेप करने से योनि संकुचित होती है ॥१॥

मांसी चन्दनमुस्ता च तगरं नागकेसरम् ।
एभिर्मासप्रयोगं च भगलेपनमुत्तमम् ॥२॥

बालछड़ ( Nardostachys Jatamansi ), सफेद चन्दन ( Sandal wood ), नागरमोथा ( Cyperus Rotundus ), तगर ( Valiriana), तथा नागकेसर ( Messua Ferrea ) को मिलाकर एक मास तक भग पर लेप करने से योनि संङ्कोचन होता है ॥२॥

मालतीकुसुमैस्तैलैर्वल्कैर्वराङ्गलेपनम् ।
ऋतुकालेऽथवा कुर्यात् तदा तत्तुल्यतां भवेत् ॥३॥
डिम्बस्थानीय पञ्चाङ्गं सर्षपतैलपाचितम् ।
सततमभिलेपेन सा भर्त्तारं वशं नयेत् ॥४॥

चमेली के फूल और छाल में तिल के तेल को पकाकर ऋतुकाल

अथवा अन्य समय में योनि पर लेप करने से योनि उसकी तुल्यता अर्थात् कौमार्य अवस्था को प्राप्त हो जाती है ॥ ३ ॥

डिम्ब के पञ्चाङ्ग ( जड़, तना, पत्ती, फूल, फल) लेकर सरसों के तेल में पकायें और इसे भग पर लेप करें तो पति वशीभूत हो जाता है ॥ ४ ॥

॥ अथ लिङ्गवर्द्धनम् ॥

**मूलं तु वानरीशृङ्गं छागीमूत्रेण लेपयेत् ।**
**लेपनात्तु ततः शिश्नं यथेच्छं कामयेद् बलात् ॥५॥**

अथ लिङ्गवर्धन प्रयोग—जटामांसी की जड़ लेकर बकरी के मूत्र में पीसे और उसे लिङ्ग पर लेप करे तो इच्छानुसार रतिक्रीड़ा में लिङ्ग वर्द्धित होता है ॥५॥

**सौभाग्यपिप्पली लाक्षा विषं च क्रमवर्द्धितम् ।**
**लेपं प्रक्षालितं लिङ्गं नारी कामयते चिरात् ॥६॥**

एक भाग सदा सुहागिन, पीपरी ( Piper Longum ) दो भाग, लाक्षारस तीन भाग तथा वत्सनाभविष ( Aconitum Ferax ) चार भाग लेकर पीसकर लिङ्ग पर लेप करे और सूख जाने पर धोकर सम्भोग करने पर चिरकाल तक लिङ्ग में प्रबलता रहती है ॥६॥

॥ अथ वीर्यस्तम्भनयोगः ॥

**पारावतं तथा गुञ्जा श्वेतोत्पलं समाक्षिकम् ।**
**नाभिलेपनमित्युक्तं वीर्यस्तम्भकरं परम् ॥७॥**

अथ वीर्यस्तम्भन प्रयोग—कबूतर का विष्ठा, घुंघुची ( Abrus Precatorius), सफेद कमल का फल तथा सोनामक्खी मिलाकर नाभि पर लेप करें तो वीर्य का स्तम्भन होता है ॥७॥

॥ अथ प्रमदाकर्षणम् ॥

**द्वादशारं लिखेच्चक्रं कुङ्कुमेन समन्वितम् ।**
**भूर्जपत्रेऽथवा वस्त्रे नेत्रे बद्धफलादिके ॥८॥**



**पत्रे पत्रे लिखेद् बीजं ह्रींकारं परमोज्ज्वलम् ।**
**साध्यनाम तथा मध्ये कर्णिकायां विशेषतः ॥९॥**
**विदर्भमन्त्रमुख्येन तत्कूटं परिमण्डले ।**
**मृत्तिकाभिः समस्ताभिः प्रतिमां कारयेद् दृढम् ॥१०॥**
**कर्षयेत् प्रमदां नृणां गर्वितां तु न संशयः ।**
**वैराग्यं न पुनर्याति दासीभावेन तिष्ठति ॥११॥**

अथ स्त्री आकर्षण प्रयोग—द्वादश पंखुड़ियों वाला चक्र कुङ्कुम से भोजपत्र अथवा वस्त्र पर लिखे। ये पंखुड़ियाँ बँधे फल (पलकों) वाले नेत्रों के समान होने चाहिए। प्रत्येक पंखुड़ी पर 'ह्रीं' बीज लिखना चाहिए। कर्णिका के मध्य में साध्य का नाम लिखना चाहिए। विदर्भ देश के मुख्य आकर्षण मन्त्र के द्वारा मण्डल के चारों ओर पंखुड़ियों के ऊपर वेष्टित करना चाहिए। सातों मृत्तिका तथा साध्य के पैर के नीचे की मृत्तिका के द्वारा स्त्री (साध्य) की प्रतिमा बनानी चाहिए और मन्त्र जप करना चाहिए। ऐसा करने से घमण्डयुक्त स्त्री निश्चित रूपेण आकर्षित होती है। वह स्त्री दासी के रूप में रहती है और वैराग्य को नहीं प्राप्त करती है ॥८-११॥



॥ अथ वशीकरणाञ्जनम् ॥

**दाडिमं पञ्चकोलं च लोहं वज्रोरसं घृतम् ॥**
**चूर्णं भूमन्दरा शाखा दन्तनखं करोति वै ॥१२॥**
**मनःशिला प्रियङ्गुश्च रोचना नागकेसरम् ।**
**नेत्राञ्जनसमायुक्तं सर्वसत्त्ववशङ्करम् ॥१३॥**

इति श्रीशिव-पार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वरमहातन्त्रे योनिसंङ्कोचनादिनिरूपणं नामेकादशः पटलः ॥ ११ ॥

अथ वशीकरण अञ्जन—अनार (Tunica Granatum), पञ्चकोली (Long, Pepper, its root, Pits choba, Plumbago and dry ginger), गजबेल (Agallochum), थूहर (Euphorbia Nerifolia) का दूध तथा घृत, लेकर एक में घोंटे। तत्पश्चात् भूमन्दारा(Erythrina Indica) का चूर्ण एवं दाँत और नखों का मल मिलावें। इसमें मैनशिल, प्रियंगु, गोरोचन, नागकेसर घोंटकर इसी के बराबर अञ्जन मिलाकर नेत्रों में आँजने से सभी जीव वश्य हो जाते हैं ॥१२-१३॥

श्रीशिव-पार्वतीसंवादात्मक वीरभद्रेश्वरतन्त्रोद्धृत उड्डामरेश्वरमहातन्त्र में योनिसंकोचनादि निरूपण नामक एकादश पटल समाप्त हुआ ॥११॥

# द्वादशः पटलः

**ॐ ह्रीं श्रीं क्लीं द्रं चण्डोग्रे त्रिनेत्रे चामुण्डे अरिष्टे हूं फट् स्वाहा। ह्रीं नमाम्यहं महादेवं नृसिंहं भीमरूपिणं ओं नमस्तस्मै ।**

"ॐ ह्रीं श्रीं क्लीं द्रं"" स्वाहा ह्रीं नमाम्यहं""ओं नमस्तस्मै" यह अरिष्टनाशक चामुण्डा तथा नृसिंह का मन्त्र है। इसका जप करने से अरिष्टों का नाश होता है ॥

॥ श्री पार्वत्युवाच ॥

**उड्डीशेन समाकीर्णे योगिवृन्दसमाकुले ।**
**प्रणम्य शिरसा गौरी परिपृच्छति शङ्करम् ॥१॥**

श्री पार्वती बोली—योगिसमूह से व्याप्त भगवान् शिव को सिर से प्रणाम करके पार्वती शिव से पूछने लगी ॥१॥

॥ श्री-ईश्वर उवाच ॥

**शृणु त्वं हि वरारोहे सिद्ध्यर्थं प्रतिवासरे ।**
**तं वदिष्यामि ते देवि सर्वं तत्समुदाहृतम् ॥२॥**

श्री शिव जी बोले—हे सुश्रोणि ! प्रतिदिन सिद्धि प्राप्ति के लिए सुनिये ! जो कुछ तन्त्र शास्त्र में कहा गया है, हे देवि ! उसे मैं कह रहा हूँ ॥२॥

**देवि यो द्विजो मन्त्रैस्तु विप्रं हन्यान्न संशयः ।**
**पूर्वोदितं मयोड्डीशं कथ्यते तव भक्तितः ॥३॥**

हे देवि ! जो ब्राह्मण नियमितरूपेण मन्त्रों से दूर नहीं रहता है, उसके लिए पहले कथित उड्डीश तन्त्र तुम्हारी भक्ति से मेरे द्वारा कहा जा रहा है ॥३॥

उड्डीशं च नमस्कृत्य रुद्रं चैव सुदुर्जयम् ।
कपर्दिनं विरूपाक्षं सर्वभूतभयावहम् ॥४॥
प्रथमं भूतकरणं द्वितीयोन्मादनं तथा ।
तृतीयं द्वेषणं चैव तुर्यमुच्चाटनं तथा ॥५॥
ग्रामोच्चाटं पञ्चमं च षष्ठं च जलस्तम्भनम् ।
सप्तममग्निस्तम्भं च वशीकरणमष्टमम् ॥६॥
अन्यानपि प्रयोगांश्च शृणुष्व वै वरानने ।
शिवेन कथिता योगा उड्डीशे शास्त्रनिश्चये ॥७॥

सुदुर्जय, रुद्र, उड्डीश, कपर्दी, विरूपाक्ष, सर्वभूतभयावह शिव को नमस्कार करके प्रथम भूतकरण, द्वितीय उन्मादन, तृतीय विद्वेषण, चतुर्थ उच्चाटन, पञ्चम ग्राम का उच्चाटन, षष्ठ जल का स्तम्भन, सप्तम अग्नि का स्तम्भन एवं अष्टम वशीकरण और अन्य प्रयोगों को सुनिए ।

हे सुमुखि ! निश्चयात्मक शास्त्र उड्डीश में शिव के द्वारा ये योग कहे गये हैं ॥४-७॥

अन्धी च बन्धीकरणं मूकीकारस्तथैव च ।
गात्रसङ्कोचनं चैव भूतज्वरकरस्तथा ॥८॥
अस्त्रशस्त्रस्य त्रुटितं पानीयस्य विनाशनम् ।
दधिमधुनाशनं च मत्तकरणं तथैव च ॥९॥
गजानां वाजिनाञ्चैव प्रकोपनं परस्परम् ।
आकर्षणं भुजङ्गानां मानवानां तथा ध्रुवम् ॥१०॥
सस्यविनाशनं चैव गर्भस्यान्तर्धिकारणम् ।
वेतालाञ्जनसिद्धिश्च उलूकसिद्धिरपि हि ॥११॥



अन्यानपि महारौद्रान् प्रयोगान् शृणु साम्प्रतम् ।
विद्यामन्त्रप्रयोगांश्च औषधं चाभिचारिकम् ॥१२॥

अन्धीकरण, बन्धीकरण, मूकीकरण, शरीर (योनि आदि) का सङ्कोचन तथा भूतज्वरकरण, अस्त्र-शस्त्र का स्तम्भन, जल का विनाशन, दही, मधु, (मद्य) का विनाश, मत्तीकरण, परस्पर हाथियों तथा घोड़ों का विद्वेषण, मनुष्य तथा सर्पों का आकर्षण, फसल का विनाश, गर्भ के अन्तर्गत व्याधिकरण, वेताल तथा अञ्जन की सिद्धि एवं उल्लू की सिद्धि, अन्य महारौद्र प्रयोग —यथा आभिचारिक ओषधियों, विद्या तथा मन्त्र के प्रयोगों को सुनिए ॥८-१२॥

गुप्ता गुप्ततराः कार्या रक्षितव्याः प्रयत्नतः ।
अकुलीनाधमबुद्धेर्भक्तिहीनस्य वै तथा ॥१३॥
हिंसकस्य च क्षुद्रस्य निन्दकस्य विशेषतः ।
स्वार्थं फलादिलुब्धस्य उपदेशममन्यतः ॥१४॥
अस्मिन् शास्त्रे पुरुषास्ते वर्जनीयाः प्रयत्नतः ।
एतैश्च सह संयोगो न कार्यः सर्वदा बुधैः ॥१५॥

ऐसे गुप्त प्रयोगों को प्रयत्नपूर्वक गुप्त रखना चाहिए । अकुलीन, अधमबुद्धि, भक्तिहीन, हिंसक, क्षुद्र, निन्दक, उपदेश को न मानने वाले, स्वार्थवश फलादि के लोभी पुरुषों के लिए इस शास्त्र (उड्डीश तन्त्र) में प्रवेश प्रयत्नपूर्वक वर्जित है । बुद्धिमानों को चाहिए कि ऐसे पुरुषों का संयोग न करें ॥१३-१५॥

य उड्डीशक्रियाशक्तिभेदं कुर्वन्ति मोहिताः ।
ते दुष्टा दुर्जयाश्चैव किमत्र बहुभाषितैः ॥१६॥
यदीच्छासिद्धिमात्मानमात्मार्थं हि तथैव च ।
सत्पूरुषाय दातव्यं देवगुरुरताय च ॥१७॥

जो मोहित होकर उड्डीश तन्त्र में निहित क्रियाओं में भेद (अविश्वास) करते हैं वे दुष्ट सर्वत्र अविजयी होते हैं, अधिक कहने से क्या लाभ ? इच्छानुसार सिद्धि को अपने लिए अथवा आत्मतत्त्व के लाभ हेतु देव, गुरुभक्ति में रत तथा सत्पुरुष को देना चाहिए ।।१६-१७।।

प्रयोगास्तु प्रयोक्तव्याः साधकैः शत्रुकारणे ।
अनिमित्ता निवर्तन्ते स्वात्मग्राहे न संशयः ।।१८।।
असन्तुष्टो ह्ययुक्तश्च प्रयोगानिति नाचरेत् ।
शास्त्रसिद्धविचारास्तु समन्त्रकोषकाः शुभाः ।।१९।।

साधकों को चाहिए कि शत्रु के लिए प्रयोग करें तथा विना कारण अपनी प्रशंसा के लिए किये गये निश्चितरूपेण ये प्रयोग नष्ट हो जाते हैं ।।१८।।

असन्तुष्ट तथा अयुक्त व्यक्ति इन प्रयोगों का आचरण न करें। शास्त्र में सिद्ध विचार वाले शुभ व्यक्ति ही उड्डीश तन्त्र के 'मन्त्र-कोष' से लाभान्वित होते हैं ।।१९।।

।। अथ गणपतिसिद्धिमन्त्रः ।।

ॐ ग्लौं गं गणेशाय नमः ।

मन्त्रेणानेन मन्त्रज्ञः कुम्भकारमृदा तथा ।
लम्बोदरं प्रकुर्वीत पूजयेदुपचारकैः ।।२०।।
साप्ताहिकं त्रिसन्ध्यायां जप्तव्यं सावधानतः ।
सहस्रैकप्रमाणेन जपाच्छान्तिर्भविष्यति ।।२१।।

अथ गणपति सिद्धि मन्त्र—"ॐ ग्लौं गं गणेशाय नमः" इस मन्त्र को जानने वाला व्यक्ति मन्त्र से कुम्भकार के हाथ की मिट्टी से गणेश जी का निर्माण करके उपचारों से पूजन करे। एक सप्ताह भर तीनों सन्ध्याओं में सावधान होकर जप करे। प्रत्येक सन्ध्या में एक हजार जप करना चाहिए, ऐसा करने से शान्ति होती है ।।२०-२१।।



प्रातरष्टोत्तरं जप्त्वा लभेद् बुद्धिं शुभां नरः ।
मासेनैकेन देवेशि श्रीलाभश्च भवेद् ध्रुवम् ।।२२।।
षण्मासेन वरारोहे महाधनपतिर्भवेत् ।
त्रिकालज्ञानवेत्ता च वर्षैकेन न संशयः ।।२३।।

तत्पश्चात् प्रातः १०८ बार जप करने से शुभ बुद्धि को मनुष्य प्राप्त कर लेता है। एक मास तक जप करने से निश्चितरूपेण लक्ष्मी का लाभ होता है। हे वरोरु ! छः महीने तक जप करने से महाधनपति हो जाता है तथा निश्चितरूपेण एक वर्ष तक जप करने से साधक त्रिकालज्ञान प्राप्त कर लेता है ।।२२-२३।।

।। अथ वाक्सिद्धि मन्त्रः ।।

ऐं नमः स्वाहा ।

प्रातः सहस्रवारं तु प्रजप्तेन प्रपूजयेत् ।
वरदां तु महादेवीं श्वेतगन्धानुलेपनैः ।।२४।।
पुष्पैर्जापैर्दक्षिणादिसोपचारैस्तु प्रत्यहम् ।
सप्तमे दिवसे ह्येवं वागैश्वर्यं प्रजायते ।।२५।।

अथ वाक्सिद्धि मन्त्र—"ऐं नमः स्वाहा" इस मन्त्र का प्रातः सहस्र बार जप करके वरदा देवी सरस्वती का श्वेत चन्दन, पुष्पादि से पूजन करना चाहिए। प्रत्येक दिन इसी प्रकार जप तथा दक्षिणादि षोडशोपचारों से देवी का पूजन करना चाहिए। ऐसा करने से सातवें दिन वाणी की सिद्धि उत्पन्न हो जाती है ।।२४-२५।।

भवेत्सद्यः प्रवक्ता च श्रुतिस्मृतिधरोऽपि च ।
बान्धवः सर्वभूतानां चिरायुः सुखमेधते ।।२६।।

वह साधक वेद, स्मृति को कण्ठस्थ कर लेने वाला शीघ्र प्रवक्ता हो जाता है। सभी जीवों के बन्धु के समान रहता हुआ वह साधक चिरायु होकर सुख की प्राप्ति करता है ॥२६॥

॥ त्रिदशाङ्गनाकर्षणमन्त्रः ॥

**ॐ क्लीं ।**

**मन्त्रेणानेन देवेशि साधकः जपमारभेत् ।**
**रक्तवस्त्रावृतो नित्यं तथा कुङ्कुमजाङ्गले ॥२७॥**
**सप्ताहजपमात्रेण ह्यानयेत् त्रिदशाङ्गनाम् ।**

अथ देवसुन्दरी के आकर्षक का मन्त्र--हे देवेशि ! "ॐ क्लीं" इस मन्त्र का जप साधक रक्तवस्त्र धारण करके केसर के जङ्गलों (वनों) में आरम्भ करें, सप्ताह-पर्यन्त जप करने से अप्सराओं का आकर्षण होता है ॥२७॥

॥ कामिन्याकर्षणमन्त्रः ॥

**ॐ द्रीं द्रीं द्रीं द्रीं स्वाहा ।**

**पूर्वविधानपूतो हि जपेदेकान्तसंस्थितः ॥ २८॥**
**आकर्षति स्त्रियं शस्तां सालङ्कारां सुवाससम् ।**

अथ स्त्री आकर्षण मन्त्र--पूर्व विधान से पवित्र होकर एकान्त में बैठकर "ॐ द्रीं द्रीं द्रीं द्रीं स्वाहा" इस मन्त्र का जप करें तो अलङ्कार-युक्त, वस्त्रों से सुसज्जित स्त्री का आकर्षण हो जाता है ॥२८॥

**ॐ हैं हः हुं ।**

**ऊर्ध्वदृष्टिप्रयोगेण जपेल्लक्षत्रयं प्रिये ॥२९॥**
**सर्वपापविनिर्मुक्तो जायते खेचरे पदे ।**

हे प्रिये ! "ॐ हैं हः हुं" इस मन्त्र को ऊपर दृष्टि रखते हुए जो साधक तीन लाख जप करे तो सारे पापों से मुक्त होता हुआ वह खेचर पद की प्राप्ति कर लेता है ॥२९॥



**ॐ द्रीं कारीण्डः क्षः क्षौं फट् स्वाहा ।**

**एकपादस्थितो भद्रे जपेदष्टोत्तरं शतम् ॥३०॥**
**यद्यत् प्रार्थयते वस्तु तद् ददाति दिने दिने ।**
**यजेन्नरविशेषश्च देवाग्निगुरुब्राह्मणैः ॥३१॥**

हे भद्रे ! एक पैर पर खड़े होकर १०८ बार "ॐ द्रीं कारीण्डः क्षः क्षौं फट् स्वाहा" इस मन्त्र का जप करें, तो इच्छित वस्तुएँ प्रति-दिन प्राप्त हो जाया करती हैं। इसके अतिरिक्त मन्त्र का साधन करते हुए नित्य देव, अग्नि, गुरु, ब्राह्मण तथा विशेष मनुष्यों ( महात्माओं ) का पूजन करना चाहिए ॥३०-३१॥

॥ अथ मनोरथप्राप्तिमन्त्रः ॥

**ॐ श्रीं क्षीं लोहं मुञ्च किलि किलि अमुकं काटय काटय मातङ्गिनि स्वाहा ।**

**मन्त्रेणानेन पूर्वाह्णे पूजयन्नुपचारकैः ।**
**शरावं पूरयित्वा तु चतुष्पथे बलिं हरेत् ॥३२॥**
**समन्त्रं क्षिप्यति पुमान् पुरुषं यदि पश्यति ।**
**आत्मचिन्तितकार्याणि साधयत्येव नान्यथा ॥३३॥**

अथ मनोरथ प्राप्ति मन्त्र--पूर्वाह्ण में "ॐ श्रीं क्षीं लोहं" मात-ङ्गिनि स्वाहा" इस मन्त्र से मातङ्गी देवी का षोडशोपचारों से पूजन करें तथा मन्त्र का जप करें, प्याले में मदिरा तथा बलि की सामग्री (खीर, नारियल, लौंग अथवा पशु-मांस) भर कर चौराहे पर इसी मन्त्र से बलि प्रदान करें। रात्रि में बलि देते हुए यदि साधक को कोई पुरुष (दिव्य पुरुष) दिखाई दे, तो अपने द्वारा चिन्तित वह सारे कार्यों की सिद्धि प्राप्त कर लेता है, यदि पुरुष का दर्शन न हो तो मनोरथ सिद्ध नहीं होते हैं ॥३२-३३॥

॥ जलस्तम्भनमन्त्रः ॥

**ॐ स्तम्भिनि स्वाहा कपालिनि स्वाहा, द्रीं द्रीं वैषादार्थिनि स्वाहा छः छः ।**

**मन्त्रेण मृत्तिकां जप्त्वा प्रतार्य सप्तधा जले ।**
**सम्मुखीभूय क्षिप्त्वा च जप्त्वा चायुतं वासरे ॥३४॥**
**तेन सिद्धो भवेन्मन्त्रः साधकस्य न संशयः ।**

अथ जलस्तम्भन मन्त्र—'ॐ स्तम्भिनि""वैषादार्थिनि स्वाहा छः छः" इस मन्त्र को दिन में जल के सम्मुख बैठकर दश हजार जपना चाहिए, इससे साधक को मन्त्र की सिद्धि हो जाती है। तत्पश्चात् मन्त्र से मिट्टी को सात बार अभिमन्त्रित करके बहते जल में फेंकने से जल का स्तम्भन हो जाता है ॥३४॥

॥ ज्वराभिभूतमन्त्रः ॥

**ॐ श्रीं क्षां क्षीं क्षूं क्षैं क्षौं क्षः ।**

**मध्याह्नसमये सूर्यसम्मुखे जपमाचरेत् ॥३५॥**
**अयुतं जप्तमात्रेण स्वसामर्थ्यं प्रपश्यति ।**
**तस्य दृष्टिनिपातेन द्विपदश्च चतुष्पदः ॥३६॥**
**ज्वराभिभूता जायन्ते अपूर्वा मन्त्रसम्पदः ।**

अथ ज्वराभिभूत मन्त्र—"ॐ श्रीं क्षां क्षीं क्षूं क्षैं क्षौं क्षः" इस मन्त्र का जप मध्याह्न में सूर्य के सम्मुख होकर करना चाहिए। साधक इस प्रकार दश हजार जप करने के उपरान्त अपनी विचित्र सामर्थ्य को देखता है। उस साधक की दृष्टि जिन द्विपद (मनुष्यों) तथा जिन चतुष्पद (पशुओं) पर पड़ती है वे ज्वर से पीड़ित हो जाते हैं। यह मन्त्र-रूपी सम्पत्ति अपूर्व है ॥३५-३६॥



॥ ज्वरनाशनमन्त्रः ॥

**ॐ हंसः हं सं सोहं स्वाहा ।**

**एकविंशतिजप्तेन जलेन ज्वरपीडितः ॥३७॥**
**विमुच्यते पानमात्रात् सद्यः स्वस्थश्च जायते ।**

अथ ज्वरनाशन मन्त्र—"ॐ हंसः हं सं सोहं स्वाहा" इस मन्त्र से ज्वरपीड़ित मनुष्य २१ बार अभिमन्त्रित जल के पान मात्र से शीघ्र ज्वर से छूट जाता है और स्वस्थ हो जाता है ॥३७॥

॥ सर्वदलनमन्त्रः ॥

**ॐ द्रीं नमो घोरेश्वरि घोरमुखि चामुण्डे ऊर्ध्वकेशि विकृताननै द्रीं द्रीं हुं फट् हुं स्वाहा ।**

अथ सर्वदलन मन्त्र—"ॐ द्रीं नमो घोरेश्वरि""फट् हुं स्वाहा" इस मन्त्र का जप चामुण्डा की पूजा करके नित्य करना चाहिए। यह सारे विघ्नों तथा शत्रुओं का दलन कर देता है ॥

॥ ग्रहारिष्टनाशनमन्त्रः ॥

**ॐ द्रीं द्रीं द्रीं फट् फट् फट् स्वाहा सर्वग्रहाणां त्रासनं कुरु कुरु अङ्गुलिप्रहारेण ।**

अथ ग्रहारिष्टनाशन मन्त्र—मोरपंख से अथवा अंगुलियों से बच्चों को "ॐ द्रीं द्रीं द्रीं अंगुलिप्रहारेण" मन्त्र से झाड़ा देने पर बालग्रहों का निवारण होता है।

॥ वलीपलितनाशनमन्त्रः ॥

**ॐ स्त्रं स्त्रां स्त्रिं स्त्रीं स्त्रुं स्त्रूं स्त्रें स्त्रैं स्त्रों स्त्रौं स्त्रं स्त्रः हरं रौं रीं रूं रैं रेविः छुं छुं हं सः अमृतवर्चसे स्वाहा ।**

**अनेन मन्त्रेणोदकं शरावे संक्षिप्याष्टोत्तरशतेनाभिमन्त्रितं कृत्वा पिबेत् प्रातरुत्थाय संवत्सरेण वलीपलितवर्जितो भवति ।**

**वृक्षस्थावरजङ्गमाकृतिं समाङ्गीकाराच्च व्याघ्र-लोमादिकं पूर्वोदर्यां भस्मीकरोति सर्वजनप्रियोभवति। चिरायुर्भवति।**

अथ वलीपलितनाशन मन्त्र-"ॐ स्त्रं स्त्रां स्त्रिं""अमृतवर्चसे स्वाहा" इस मन्त्र से प्याले में जल डालकर १०८ बार मन्त्र से अभिमन्त्रित करके प्रातःकाल एक वर्ष तक पान करे तो मनुष्य वृद्धावस्था तथा सफेद बालों से रहित हो जाता है।

वृक्ष, स्थावर तथा जङ्गम आकृतियों के समान स्वीकार करता हुआ व्याघ्र के लोमादि को पूर्व में स्थित गुफा में उक्त मन्त्र के द्वारा भस्म करे और भस्म का तिलक या उबटन लगावे तो वह सर्वजनप्रिय तथा दीर्घायु होता है।

॥ अथेप्सितलाभमन्त्रः ॥

**ॐ नमो भगवते रुद्राय चण्डेश्वराय हुं हुं हुं फट् स्वाहा।**

**अनेन मन्त्रेण जपं कृत्वा शीघ्रमीप्सितं लभेत्।**

अथ ईप्सितलाभ मन्त्र —"ॐ नमो भगवते""फट् स्वाहा" इस मन्त्र का जप करने से शीघ्र ही इच्छित वस्तुओं की प्राप्ति होती है।

॥ अथमेघस्तम्भनमन्त्रः ॥

**ॐ हूं द्रीं क्षं क्षां क्षिं क्षीं क्षुं क्षूं क्षें क्षैं क्षों क्षौं क्षं क्षः हूं फट् स्वाहा।**

**इमं मन्त्रं पूर्वं लक्षमेकं जपेत्, तद्दशांशमयुतं हवनं कुर्यात्। एकैकं समिधं घृताक्तां जुहुयात् सिद्धो भवति। गङ्गागोलोके न ते मेघाः प्रणश्यन्ति न च वर्षन्ति वासवो**



**नदसमुद्रं शोषयति। उदकमध्ये स्थित्वा जपं करोत्यनावृष्टिकालेऽतिवृष्टिं करोति।**

अथ मेघस्तम्भन मन्त्र--"ॐ हूं द्रीं"' फट् स्वाहा" इस मन्त्र को पहले एक लाख जप करे और इसका दशांश दश हजार हवन करे। घृत से युक्त करके एक-एक समिधा का हवन करे तो मन्त्र सिद्ध हो जाता है। इस मन्त्र का प्रयोग करने से गङ्गा तथा गो (गाय से युक्त) प्रदेशों में मेघ नष्ट नहीं होते हैं और न वर्षा ही करते हैं। मन्त्र के प्रभाव से इन्द्र नद-समुद्र को सुखा देते हैं। जल के मध्य में स्थित होकर यदि अनावृष्टि के समय इस मन्त्र का जप किया जाय तो अतिवृष्टि होने लगती है॥

॥ अथ कुमारपूजनमन्त्रः ॥

**ॐ द्रीं प्रचलिते कुबेरे हूं हूं किलि किलि स्वाहा।**

**पूर्वं वेलायामादर्शदीपसमीपे षडङ्गुलेन भाजने सूर्यमण्डले कुमारं वामे वेशयति, पूर्वमयुतजपः कर्त्तव्यः पञ्चोपचारेण पूजा च कर्त्तव्या पूर्वाभिश्च स्वराज्ये।**

अथ कुमारपूजन मन्त्र--पूर्ववेला (प्रातःकाल) में आदर्श दीपक के समीप छः अंगुल परिमाण के पात्र में सूर्यमण्डल का निर्माण करके कुमार को मण्डल में बायीं ओर बैठावे। 'ॐ द्रीं""स्वाहा' इस मन्त्र का १० हजार जप करना चाहिए तथा पञ्चोपचार से पूजा करनी चाहिए। यह कार्य अरिष्ट निवारणाय महामारी के निवारण हेतु राजा को अपने राज्य में अवश्य कराना चाहिए।

॥ अथ ग्रामप्राप्तिमन्त्रः ॥

**ॐ श्रीं हिमजाते प्रयच्छ मे धनं स्वाहा।**

**अनेन मन्त्रेण सिद्धार्थकं घृतमिश्रितं हुनेत् अष्टोत्तर-शतेन, अन्नपानविमिश्रितं सहस्रेण हुनेन्मनसः प्रार्थितं लभेद् अयुतं हुनेच्छ्रीसुमना भवेत्, लक्षं हुनेद् ग्रामशतं लभेत् ।**

अथ ग्राम-प्राप्ति-मन्त्र—"ॐ श्रीं""स्वाहा" इस मन्त्र से १०८ बार सफेद सरसों तथा घृत से हवन करें, अन्न से मिश्रित घृत का हजार बार हवन करे तो मन से प्रार्थित वस्तुएँ प्राप्त होती हैं। दश हजार हवन करने से उत्तम लक्ष्मी की प्राप्ति होती है तथा एक लाख हवन करने से १०० ग्रामों का लाभ होता है ॥

॥ अथ कामप्रदो मन्त्रः ॥

**ॐ नमो नमः ।**

**इमं मन्त्रं शतं जपेत्सर्वकामप्रदोऽयं मन्त्रः ।**

अथ कामप्रद मन्त्र—"ॐ नमो नमः" इस मन्त्र का सौ बार जप करना चाहिए, यह सारी इच्छाओं की प्राप्ति कराने वाला मन्त्र है।

॥ अथ कामदमन्त्रः ॥

**ॐ ह्रीं श्रीं सारसे सिद्धिकरि क्रौं नमः स्वाहा ।**

**इमं मन्त्रं लक्षमेकं जपेद् रक्तकरवीरैश्च पूजयेत् सततं सर्वकामदोऽयं मन्त्रः ।**

अथ कामद मन्त्र—"ॐ ह्रीं ""नमः स्वाहा" इस मन्त्र को एक लाख जप करे तथा लाल कनेर के पुष्पों से देवी का पूजन करे तो निरन्तर सभी कामनाओं की प्राप्ति होती है।

॥ अथ सर्वस्त्रीभाजन मन्त्रः ॥

**ॐ द्रुं क्षें क्षैं हुं क्षः अमुकं क्षः स्वाहा ।**



**अनेन मन्त्रेण राजिकालवणतुषकण्टकशिवनिर्माल्यं कटुतैलेनाऽयुतं हुनेत्समस्तस्त्रीभाजनं भवति ।**

अथ सर्वस्त्रीभाजन मन्त्र—"ॐ द्रुं""क्षः स्वाहा" इस मन्त्र से राई, लवण (नमक), भूसी, काँटें (बेल के काँटे) तथा शिवनिर्माल्य का कडुवे तेल के साथ दस हजार हवन करे, तो वह साधक सभी स्त्रियों का आदर-पात्र होता है।

॥ अथ शत्रुसैन्यस्तम्भन मन्त्रः ॥

**ॐ हुं हुं हुं लूं लं हुं लौं हुं लः अमुकं छः छः स्वाहा ।**

**अनेन मन्त्रेण सिद्धार्थं भस्मना सह मन्त्रितं कर्त्तव्यं यस्य गृहे प्रक्षिप्य मन्त्रवलिपार्श्वैराक्षिपेत् तस्य बाहुस्तम्भो भवति । रिपुसैन्याग्रे क्षिपेत् शत्रुसैन्यस्तम्भो भवति, अश्व-गजनरा निश्चेष्टा भवन्ति, विकला भवन्ति, समन्तादेवा-कुला भवन्ति ।**

अथ शत्रु-सैन्यस्तम्भन मन्त्र—"ॐ हुं हुं""छः छः स्वाहा" इस मन्त्र का जप करके चिताभस्म से सफेद सरसों को मिलाकर अभि-मन्त्रित करना चाहिए, जिसके घर में फेंक कर पुनः मन्त्र से युक्त घर के दोनों ओर वलि प्रदान करें तो उस घर में रहने वाले मन्त्र में कथित व्यक्ति की भुजाएँ स्तम्भित हो जाती हैं। शत्रु की सेना के आगे यदि उक्त विधि से मन्त्रित द्रव्य डालें तो शत्रु-सेना का स्तम्भन हो जाता है। सेना में स्थित घोड़े, हाथी तथा मनुष्य चेष्टाविहीन हो जाते हैं, विकल हो जाते हैं और चारों ओर व्याकुल हो जाते हैं।

॥ अथ वातादिविकारनाशकमन्त्रः ॥

**ॐ रं रं मुखे स्वाहा ।**

**अनेन मन्त्रेण जप्ततैलेन मुखं प्रक्षाल्य तिलतैलेन गात्राभ्यङ्गं वा विधाय वातादिकं दिनसप्तकेन नश्यति ।**

अथ वातादिविकारनाशक मन्त्र—"ॐ रुं रुं मुखे स्वाहा" इस मन्त्र से अभिमन्त्रित तिल के तेल को मुख पर लगायें अथवा शरीर पर मलें तो सात दिन में वातादि विकार नष्ट हो जाते हैं ।

॥ अथेप्सितफलप्राप्तिमन्त्रः ॥

**ऐं मातङ्गि विमलावति विकराले द्रीं छः छः स्वाहा ।**

**अनेन मन्त्रेण जपापुष्पं परिजप्य वारिणि नद्यादौ होमयेत् सप्ताहेनेप्सितं फलं लभेत् ।**

अथ इच्छित फल प्राप्ति मन्त्र—"ऐं मातङ्गि···स्वाहा" इस मन्त्र से गुड़हल के पुष्प अभिमन्त्रित करके नदी आदि के जल में डालें तो एक सप्ताह में इष्टफल की प्राप्ति होती है ।

॥ अथ नष्टवित्तलाभमन्त्रः ॥

**कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रभृत् ।**
**तन्नामकीर्त्तनादेव हृतं नष्टं च लभ्यते ॥३८॥**
**नित्यं नित्यं जपेत्किञ्चिद्विद्यावित्तस्य प्राप्तये ।**

अथ नष्टधनलाभ मन्त्र—"कार्त्तवीर्यार्जुनो···लभ्यते" विद्या तथा धन की प्राप्ति हेतु नित्य उक्त मन्त्र का जप करना चाहिए ।

॥ अथ वृश्चिकमन्त्रः ॥

**ॐ मं किणि स्वाहा ।**

अथ वृश्चिक मन्त्र—"ॐ मं किणि स्वाहा" इस मन्त्र से अभिमन्त्रित करने पर बिच्छू का विष दूर होता है ।

॥ अथ सर्वविषापहरणमन्त्रः ॥

**ॐ हुं हुं हं सः हं सं सोहं सोहं स्वाहा ।**



**इति सर्वविषापहरणमन्त्रेण मयूरपिच्छेन कुशेन शरेण शरदण्डेन वा तद्देहे सम्मार्जनं कुर्यात् ।**

अथ सर्व-विषहरण मन्त्र—"ॐ हुं हुं···स्वाहा" यह सभी विषों के हरण का मन्त्र है । मोरपंख, कुश अथवा सरकण्डों से इस मन्त्र के द्वारा शरीर पर सम्मार्जन करना चाहिए ।

॥ अथ विषहरणमन्त्रः ॥

**हं हां हिं हीं हुं हूं हें हैं हों हौं हं हः छः छः स्वाहा ।**

**इमं गोक्षीरसदृशं बारं बारं विचिन्तयेद्वा वरानन-मुखे शिरसि शरीरे ततः कण्ठे ततो हृदि नाभिमण्डले गुप्ते तथा सर्वाङ्गे चिन्तयेत्तथा पूरकेण वरारोहे कण्ठदंष्ट्रोऽपि जीवति ।**

अथ विषहरणमन्त्र—"हं हां···छः छः स्वाहा" इस मन्त्र का जप करते हुए बार-बार गाय के दूध के समान श्रेष्ठ मुख, शिर तथा शरीर पर ध्यान करना चाहिए । इसके उपरान्त कण्ठ, हृदय, नाभिमण्डल, गुह्यप्रदेश तथा सर्वाङ्ग में ध्यान करे । इसके बाद पूरक प्राणायाम करते हुए श्रेष्ठ जघनस्थल पर ध्यान करे, तो इस प्रकार कण्ठगत प्राण वाला विषग्रसित मनुष्य भी जीवित हो जाता है ।

॥ अथ विघ्नहरण-ज्वरविलोपनमन्त्रः ॥

**ॐ गं गणपतये महागणपतये विघ्नहराय मतङ्गसम्भवाय लम्बोदराय गौरीप्रियपुत्राय ह्रीं गां नमः रं हं क्षः स्वाहा ।**

**गोरोचनाविषराजिकापिप्पलीनीचयवैर्महातैलेन सह देवदत्तैश्च लक्षितानालिखेत्, निम्बकाष्ठेन प्रतिकृतिं हुत्वा पृष्ठतो लिखेत्सद्यो ज्वरविलोपो भवति, शान्तिर्भवति ।**

अथ विघ्नहरण तथा ज्वरविलोपनमन्त्र--"ॐ गं गणपतये… स्वाहा" गोरोचन, विष, राई, पिप्पली तथा इन्द्रजौ को कड़ुवे तेल में मिला कर 'देवदत्त' (साध्य) नाम से लक्षित एक मूर्त्ति बनायें, तत्पश्चात् जप, पूजन के पश्चात् नीम की लकड़ी से मूर्त्ति के पृष्ठ भाग पर उक्त मन्त्र लिखे और नीम की समिधाओं से मूर्त्ति का हवन करें तो शीघ्र साध्य के ज्वर नष्ट हो जाते हैं तथा विघ्नों का हरण होकर शान्ति की प्राप्ति होती है ।

इति श्रीशिवपार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वरमहातन्त्रे मन्त्रकोषनिरूपणं नाम द्वादशः पटलः ॥१२॥

श्रीशिवपार्वतीसंवादात्मक वीरभद्रेश्वरतन्त्र से उद्धृत उड्डामरेश्वरमहातन्त्र में मन्त्रकोषनिरूपण नामक द्वादश पटल समाप्त हुआ ॥१२॥

# त्रयोदशः पटलः

॥ अथ भोजनप्राप्तिमन्त्रः ॥

**ॐ द्रीं विद्यास्तम्भिनि स्तम्भिनि छः छः स्वाहा ।**

**इमं मन्त्रं प्रथममयुतमेकं जपेत् पश्चान्मनसा संस्मरेत् । वनमध्येऽपि भोजनं प्राप्नोति ।**

अथ भोजनप्राप्ति मन्त्र--"ॐ द्रीं…स्वाहा" इस मन्त्र को पहले दश हजार जप करे, तत्पश्चात् मन से इस मन्त्र का स्मरण करे तो वन के मध्य में भी भोजन की प्राप्ति होती है ।

॥ अथ स्त्रीपुरुषयोरभिषेकविधिः ॥

**ॐ ह्रौं नमो भगवते महारुद्राय उड्डामरेश्वराय हुं हुं छं छं द्रीं द्रीं स्वाहा ।**

**अनेन मन्त्रेणाभिषेकार्थं सहस्रवारजप्त कलशं कारयेत्, तन्मध्ये पञ्चरत्नं निधाय श्वेतवस्त्रेण वेष्टयेत्, नाना फलसुसंपूर्णं नानारत्नोपशोभितं तद्द्वारकगृहवासं कलशं धृत्वा रात्रौ स्त्रिया सह श्मशाने वनस्पतौ वा एकवृक्षे वा सरस्तटे समुद्रगामिन्यां नद्यां वा चतुष्पथे वा गच्छेत् । ततश्च कलशं नीत्वा स्त्री वन्ध्या वा मृतवत्सा वा दुर्भगा वा काकवन्ध्या वा भङ्गा सर्वजनप्रिया भवति, पीडिता उद्वर्तयेत् । प्रियङ्गुः कुङ्कुमं गोरोचना नागकेसरो दूर्वा हरिद्रे द्वे**

**सिद्धार्थकद्वयं वचा पुनर्नवाऽपामार्गोऽर्कश्चित्रकं शाल्मली लक्ष्मणा तालमूली शतावरी वन्ध्याकर्कटी बलाक्षी मृगपिप्पली तथा चिराणि सुपत्राण्युशीरं घृतं मधु तथा पलाशपुष्पपत्राणि अम्बरबिल्वपत्राण्यश्वगन्धादीनि सुगन्धद्रव्याणि सर्वाणि सर्वे साध्यविशेषतः, अन्यदुद्वर्तयेद् गात्रं शिरोलेपनो यः पुनः कलशं प्रक्षिप्य स्नापयेत् लभस्त्रियम्, सदोद्वर्तनवस्त्रं त्यक्त्वाऽपरवस्त्रपरिधानं कुर्यात्। भद्रासने व्यवस्थिता..........कुर्याद् द्वारि निःक्षिप्य कुम्भस्थितां, या स्त्रीणां मध्ये समाकर्षति यन्त्रम्, ततस्तां सम्मुखस्त्रियमर्चयेत्।**

अथ स्त्री-पुरुषों के अभिषेक की विधि--"ॐ ह्रीं""स्वाहा" इस मन्त्र से अभिषेक के लिए हजार बार जप करके कलश का निर्माण करे, उस कलश के मध्य में पञ्चरत्न डालकर सफेद वस्त्र से कलश वेष्टित करे, अनेक फलों से पूर्ण, अनेक रत्नों से सुशोभित घर के द्वार पर कलश रखकर रात्रि में स्त्री के साथ श्मशान में पेड़ पर या सरोवर के तट पर अकेले स्थित वृक्ष पर अथवा समुद्र पर्यन्त जाने वाली नदी पर या चौराहे पर जाना चाहिए। इसके बाद कलश लेकर वन्ध्या स्त्री या मृतवत्सा या दुर्भगा अथवा काकवन्ध्या अथवा जो अङ्ग से रहित हो, ऐसी स्त्री भी सर्वजनप्रिया हो जाती है। इसके बाद पीस कर अधोलिखित वस्तुएँ उबटन में लगानी चाहिए। प्रियंगु (Selastrus Panicalta), केशर (Crocus Sativas), गोरोचन, नागकेशर (Messua Ferrea); दूर्वा (Cynodon Dectyton); हल्दी तथा दारुहल्दी (Berberis Aristata), पीली सरसों एवं सफेद सरसों, वच (Acorao Calamus), पुनर्नवा (Boerhavia Diffusa), लटजीरा (Achyranthes Aspera), मदार (Calortopis Giganea), चित्रक (Plumbago



Zeylomica), सेमल (Salmalia Malabarica), श्वेत कटेरी (Ardea Sibirica), तालमूली (Curcuigo Orchioides), शतावरी (Asparagus Racemosus), बांझ ककोड़ी (Pistacia Integerrima), बला (Abuliton Indicum), थूहर (Euphorbia Rerifolia), गजपीपल, पुराना एवं सुन्दर खस (Root of Andropogon Muricatus), पुराना घृत, पुराना शहद, पलाश (Bute Frondosa) के फूल और पत्ते, कपास के बीज, बेल (AegleMarmelos) के पत्र तथा असगन्ध (Withania Somnifera) आदि सुगन्धित सभी द्रव्य लेकर विशेषरूपेण साध्य (स्त्री-पुरुष) इनका उबटन लगाये। शरीर तथा शिर पर लेपन करके पुनः कलश का जल डाल-डाल कर स्नान करावें। इससे स्त्री के वन्ध्यादि दोष दूर होकर शुभ-स्त्रीत्व की प्राप्ति होती है। सदा उबटन लगे वस्त्रों को त्याग करके दूसरे वस्त्र धारण करने चाहिए। भद्रासन पर बैठ करके..................करना चाहिए, घड़े में स्थित (जलादि) को द्वार पर छिड़क करके, स्त्रियों के मध्य में यन्त्र जिस स्त्री को आकर्षित करें उस स्त्री को सम्मुख बिठाकर उसका पूजन करना चाहिए। (यह अंश यहाँ पांडुलिपि में कटा होने के कारण अस्पष्ट है।)

**वस्त्रालङ्कारसिन्दूरसुगन्धिकुसुमादिभिः।**
**गृहेऽर्चां कारयेद् देवं शिवं देव्या सहार्चयेत् ॥१॥**

वस्त्र, आभूषण, सिन्दूर, गन्ध तथा पुष्प आदि से घर में पूजा करानी चाहिए, देवी पार्वती के साथ शिव का पूजन करना चाहिए ॥१॥

**दक्षिणां स पुमान् दद्यात् श्वेतां गां वत्ससंयुताम्।**
**अथ स्नानफलं वक्ष्ये यथोक्तं त्रिपुरारिणा ॥२॥**

पुरुष को चाहिए कि वह बछड़े से युक्त सफेद गाय दक्षिणा में प्रदान करे। शिव के कथनानुसार स्नान का फल बता रहा हूँ ॥२॥

**पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।**
**शान्त्यर्थी शान्तिमाप्नोति दुर्भगा सुभगा भवेत् ॥३॥**

इस अभिषेक (स्नान) से पुत्रार्थी पुत्र की प्राप्ति करता है तथा धनेच्छुक को धनलाभ होता है। शान्ति चाहने वाला शान्ति प्राप्त करता है एवं दुर्भगा स्त्री सुभगा हो जाती है ॥३॥

**भ्रष्टराज्यस्तथा राजा राज्यं प्राप्नोति निश्चितम् ।**
**अभार्यो लभते भार्यां सुखार्थी सुखमाप्नुयात् ॥४॥**

भ्रष्ट राज्य वाला राजा राज्य को निश्चितरूपेण प्राप्त कर लेता है। पत्नीरहित पुरुष पत्नी की प्राप्ति कर लेता है और सुख चाहने वाला सुख प्राप्त करने में समर्थ हो जाता है ॥४॥

यह स्त्री-पुरुषों के स्नान का फल है।

॥ अथ निपातीकरणमन्त्रः ॥

**हुं अमुकं हुं फट् स्वाहा ।**

**श्मशाने गत्वा उलूककपोतकाञ्जीराणामतिसत्वरं स्तन्यं गृहीत्वा जपेत्सप्ताहेन ।**

अथ निपातीकरण मन्त्र--"हुं अमुकं हुं फट् स्वाहा" इस मन्त्र का श्मशान में जाकर उल्लू, कबूतर तथा काञ्जीर पक्षियों का ताजा दूध लेकर एक सप्ताह तक जप करे तो निपातीकरण होता है। 'अमुक' के स्थान पर साध्य का नाम ग्रहण करना चाहिए।

**हुं अमुकं फट् फट् स्वाहा ।**

**अनेन मन्त्रेण भानुवृक्षसमीपे स्थित्वाऽयुतैकं जपेत् ततः कटुतैलेन दशांशेन हवनं कुर्यात् निपातीकरणं भवति ।**

"हुं अमुकं फट् फट् स्वाहा" इस मन्त्र को मदार वृक्ष के समीप बैठकर दश हजार जप करे और इसके बाद कड़ुवे तेल से दशांश हवन करे तो निपातीकरण होता है। 'अमुक' के स्थान पर साध्य का नाम लेना चाहिए।



॥ अथ वृष्टिकारकमन्त्रः ॥

ॐ ॐ ॐ ।

**इति मन्त्रं पूर्वमयुतं जप्त्वाऽनावृष्टिकाले जपेन्महावृष्टिर्भवति ।**

अथ वृष्टिकारक मन्त्र--"ॐ ॐ ॐ" इस मन्त्र को पहले दश हजार जप करे तत्पश्चात् अनावृष्टि के समय जप करने से महावृष्टि होने लगती है।

॥ अथ सार्वकालिकफलप्राप्तिमन्त्रः ॥

**ॐ ह्रीं वरदे स्वाहा ।**

**इमं मन्त्रं पूर्वमयुतं जप्त्वा तद्दशांशं पलाशसमिद्भिर्हवनं कुर्यात् घृतं हुनेत् ततः सार्वकालिकं फलं लभेत् ।**

अथ सार्वकालिकफल-प्राप्ति मन्त्र--"ॐ ह्रीं वरदे स्वाहा" इस मन्त्र को पहले दशहजार जप करे और पलाश की समिधाओं से दशांश घृत द्वारा हवन करे, तो सार्वकालिक फल की प्राप्ति होती है।

॥ अथ महेन्द्रज्वरावेशमन्त्रः ॥

**हुं हुं हुं नं नं नं अमुकं हुं फट् स्वाहा ।**

**इमं मन्त्रं पूर्वमयुतं जप्त्वा खादिरसमिधो रुधिरेण लिप्त्वा तद्दशांशं हुनेत्, यस्य नाम्ना स सहस्रेकेन महेन्द्रज्वरेण गृह्यते, अयुतहवनेन निपातनम्, तथानेनैव मन्त्रे-**

